

# संस्कृत कुसुमाञ्जली

# संस्कृत-कुसुमाञ्जलिः

(अपेक्षित-शब्दार्थ-व्याकरण-अभ्यास सहित)

संपादक

**प्रो० हेमराज शास्त्री**

एम० ए० (संस्कृत-हिन्दी) एम० ओ० एल०

पंजाब यूनिवर्सिटी संस्कृत-विभाग, जालन्धर

प्रकाशक

**मोतीलाल बनारसीदास**

हिन्दी-संस्कृत पुस्तक विक्रेता

जवाहरनगर, दिल्ली।

सोल एजेण्ट

**अत्तरचंद कपूर एण्ड सन्स**

कशमीरी गेट, दिल्ली

ॐ

नमो ब्रह्मादिभ्यो ब्रह्मविद्यासम्प्रदाय
कर्तृभ्यो वंश ऋषिभ्यो महद्भ्यो-
नमो गुरुभ्यः ।

## आमुख

सुरभारती अपनी मधुरिम-महिमा का स्रोत अत्रुटित धारा से ।ऐतिहासिक काल से लेकर अब तक हमारे कानों में सतत प्रवाहित करती हुई, अपनी प्राचीनता, उपजीव्यता और शब्द-भंडार-संपन्नता के कारण उपादेयता का पूर्ण परिचय दे रही है—इस तथ्य को आज का भौतिक एवं वैज्ञानिक युग भी बिना माने नहीं रह सकता। इतिहास स्पष्ट रूप से गवाही दे रहा है, कि इसने अपने यौवन काल में इस महाकाय भारत देश को किस तरह राष्ट्रीयता के अच्छेद्य एवं अभेद्य सम्बन्ध सूत्र से बाँधकर बहुत्व में एकत्व का अपूर्व प्रतिबिंब दिखाया है।

अपने दीर्घकाल से परिवर्तमान रूप को सतत धारा से प्रकट करती हुई देववाणी इस विज्ञान-प्रधान युग में भी भाषा वैज्ञानिकों को अपेक्षित सामग्री का बड़ा पर्याप्त एवं श्लाघनीय भाग प्रदान कररही है।

भारत की पुरातन संस्कृति एवं सभ्यता का भास्वर निदर्शन तो एकमात्र यह है ही। इन सब उपादेयता के अंगों के द्वारा ही इसे इस उपयोगितावाद के युग में विश्व के यावत् विश्व-विद्यालय पाठचरूप से समुचित स्थान दे रहे हैं।

प्रस्तुत पुस्तक सुकुमारमति बालकों को लक्ष्य रखकर लिखी गई है; और इस बात का पूरा ध्यान रखने का प्रयास किया गया है, कि प्रारम्भिक शिक्षा में ही छात्र भाषा की अमूल्य देन से यथाशक्य परिचय प्राप्त कर सकें।

इसमें नीति तथा धर्म के कथानकों के साथ उपनिषदों के उपाख्यानों को भी समुचित स्थान प्राप्त है। इन उपाख्यानों को रोचक बनाने के लिये यद्यपि कहानियों की आधुनिक परिभाषा का अनुसरण तथा प्रचलित शब्द-चय नितान्त आवश्यक समझा गया है, तो भी औपनिषद गन्ध की अनुभूति में कोई विघ्न उपस्थित नहीं होने दिया। सर्वात्मना यही यत्न रखा गया है, कि रोचकता के साथ सरलता सब प्रकार के पाठों में अपना विशेष स्थान रखती हुई छात्र के हृदय में संस्कृत-साहित्य के प्रति उच्चभावना को अंकुरित करे।

प्रत्येक पाठ के अन्त में ही तदन्तर्गत प्रायः सभी कठिन शब्दों का अर्थ देने की चेष्टा की गई है। अभ्यास में भी इस प्रकार की प्रश्नावली रखी गई है जिससे छात्र पाठ के आशय को पूर्णतया समझकर उत्तर देने से भाषा तथा भाव पर अधिकार प्राप्त कर सकें। व्याकरण के सभी अंगों से स्थूल परिचय जिस तरह प्राप्त हो सके तदनुसार प्रश्न बनाने का प्रयास किया गया है।

मुझे पूर्ण आशा है कि मेरा इस प्रकार का यह प्रयास छात्रों के लिये अवश्य उपयोगी प्रमाणित होगा।

इति शम्

जालन्धर
९-८-५६

हेमराज

# विषयसूचिका

---

# शिवसङ्कल्पप्रार्थना

यज्जाग्रतो दूरमुदैति दैवं,
तदु सुप्तस्य तथैवैति ।
दूरङ्गमं ज्योतिषां ज्योतिरेकं
तन्मे मनः शिवसङ्कल्पमस्तु ॥१॥

येन कर्माण्यपसो मनीषिणो-
यज्ञे कृण्वन्ति विदथेषु धीराः ।
यदपूर्वं यक्षमन्तः प्रजानां
तन्मे मनः शिवसङ्कल्पमस्तु ॥२॥

यत्प्रज्ञानमुत चेतो धृतिश्च
यज्ज्योतिरन्तरमृतम्प्रजासु ।
यस्मान्न ऋते किञ्चन कर्म क्रियते
तन्मे मनः शिवसङ्कल्पमस्तु ॥३॥

येनेदं भूतं भुवनं भविष्यत्
परिगृहीतममृतेन सर्वम् ।
येन यज्ञस्तायते सप्त होता
तन्मे मनः शिवसङ्कल्पमस्तु ॥४॥

यस्मिन्नृचः साम यजूंषि यस्मिन्
प्रतिष्ठिता रथनाभाविवाराः ।
यस्मिंश्चित्तं सर्वमोतं प्रजानां
तन्मे मनः शिवसङ्कल्पमस्तु ॥५॥
सुषारथिरश्वानिव यन्मनुष्यान्
नेनीयतेऽभीशुभिर्वाजिन इव ।
हृत्प्रतिष्ठं यदजिरं जविष्ठं
तन्मे मनः शिवसङ्कल्पमस्तु ॥६॥

## शब्दार्थ

**शिवसंकल्प**=अच्छे विचारवाला । **मनीषिणः**=विद्वान् लोग । **कृण्वन्ति**=करते हैं । **विदथेषु**=विद्याओं में । **ऋते**=विना । **भविष्यत्**=होनेवाला । **परिगृहीतम्**=स्वीकृत । **तायते**=विशाल होता है । **रथनाभौ**=रथ की नाव में । **अराः**=लकड़ी के टुकड़े जो कि चक्र में लगे रहते हैं । **ओतम्**=पोया हुआ । **अभीशुभिः**=रस्सियों से । **अजिरम्**=आंगन । **जविष्ठम्**=अत्यन्त वेगवाला ।

---

# धौम्यशिष्य उपमन्युः

धौम्य आचार्यः शिष्यमुपमन्युं गवां रक्षणे न्ययुङ्क्त । स चोपमन्युः आ दिनोदयम् आ च सायाह्नात् शाद्वलवतीष्वरण्यभूमिषु ताश्चारयित्वा निशामुखे गोष्ठे बद्ध्वा गुरुं वन्दितुमुपासदत् । तदा तं पीनगात्रमालक्ष्य, आचार्योऽन्वयुङ्क्त—"उपमन्यो, कुतः पीनो दृश्यसे, किमाहारो भवसि ?" इति ।

उपमन्युर्भिक्षामटामीति प्रत्यवादीत्

आचार्यः—"मह्यमनिवेद्य भिक्षां न भोक्तुमर्हसि—" इति तमनुशशास ।

तदारभ्य उपमन्युर्भिक्षां समाहृत्य गुरवे न्यवेदयत् सर्वां तां स्वयमुपयुज्य तस्मै न किंचिदपि अवाशेषयत् ।

अथोपमन्युर्यथापूर्वं दिनात्यये वन्दितुमागच्छन् पुनः पीनोऽदृश्यत् । गुरुरप्राक्षीत्—"उपमन्यो ! मह्यं भिक्षां समग्रां निवेदयसि । अपि च पुनः पीनो भवसि । केन वृत्तिं कल्पयसि ?" इति ।

उपमन्युरवदत्—"अहं द्विर्भिक्षां चरामि । एकां भवते निवेद्य अपरामहं भुञ्जे—" इति ।

आचार्यः प्राह--"मैवं कार्षीः। गृहिणां पीडा भवति। अपि च इतरेषां भैक्षवृत्तीनां वृत्त्युपरोधः, येन द्विगुणं त्वमेको भिक्षां गृह्णासि-" इति। उपमन्युः तथेत्युक्त्वा निर्जगाम।

परेद्युरुपागतः स पुनः पीनोऽदृश्यत।

गुरुरपृच्छत्-निश्शेषां भिक्षां मह्यं निवेदयसि किल?

उपमन्युः--अथ किम्?

गुरुः--न च द्वितीयां भिक्षां चरसि?

उपमन्युः--बाढं न चरामि।

गुरुः--तर्तिक पुनः पीनो भवसि? केन वर्तयसि?

उपमन्युः--मया संरक्ष्यमाणानां गवां दुग्धेन अहं वर्तयामि।

गुरुः--नैतद्युज्यते। तन्नानुमतं मया कदापि। दुग्धमितः परं नादातुमर्हसि।

उपमन्युः--तथेत्याह।

अन्येद्युरागतः स पुनः पीन एवादृश्यत।

आचार्यः--त्वं भिक्षां नाश्नासि। न च द्वितीयां भिक्षामादत्से। न च दुग्धं पिबसि। कथं पीनो भवसि?

उपमन्युः——दुग्धपायिनां वत्सकानां मुखात् निष्यन्दमानं फेनपटलं पिबामि।

आचार्यः——नैतत् अनवद्यं पश्यामि। यत्तर्णकाः त्वत्कृते प्रणयात् भूरि फेनपटलमुद्गिरेयुः। तेन च ते अपुष्टाः भविष्यन्ति। मैवमितः परं पयःफेनं गृह्णीयाः।

उपमन्युः तथेति प्रत्यपद्यत।

परेद्यवि कान्तारमध्ये गाश्चारयत् उपमन्युः अतिमहत्या क्षुधया अबाध्यत। सोऽर्कपत्राणि अभक्षयत्। तेन च विकलनेत्रो बभूव। परिक्रामंश्च विपथे सोऽन्धकूपोदरे न्यपतत।

अथ दिनक्षये यथापूर्वमनागते उपमन्यौ धौम्यः शंकाकुलो बभूव। तमन्वेष्टुं शिष्यवृन्दानुगतः परिभ्रमन्स काननमुपागतः——"अयि वत्स उपमन्यो, कुत्रासि भोः! देहि मे प्रतिवचनम्"——इत्याजुहाव।

आचार्यस्याह्वानम् आकर्ण्य कूपस्थ उपमन्युः प्रत्यभाणीत्–"एष भोः कूपे निपतितोऽस्मि"–इति।

आचार्यः——कथं त्वं कूपे न्यपतः?

उपमन्युः——अर्कपत्राण्यहं भुक्त्वा अन्धोऽभवम्।

आचार्यः--"तेन ह्यश्विनौ देवौ अनेन मन्त्रेण स्तुहि, नेत्रे प्रतिलप्स्यसे--" इति तस्मै मन्त्रमुपादिक्षत् प्रतिन्यवर्तत च ।

तत उपमन्युर्मन्त्रं जजाप । तस्याश्विनौ प्रत्यक्षीभयोचतुः--"भो उपमन्यो ! इममपूपम् अशान" इति ।

उपमन्युः--गुरवे तमनि वेद्य नाऽश्नामि ।

अश्विनौ--पुरा कदाचित्ते गुरुर्धौम्य एवमावाभ्यां दत्तमपपं स्वगुरवेऽनिवेद्यैव अभक्षयत् । तत्त्वमपि कुरु ।

उपमन्युः--प्रसीदतं प्रसीदतं, नाहं तथा अनिवेद्य भोक्तुं क्षमः ।

अश्विनौ--अहो ! प्रीतौ स्वः । अभिनन्दावः परमां तव गुरुभक्तिम् । चक्षुषी ते प्रकाशेताम् । अतुलां कीर्तिमाप्नुहि ।

एवमुपमन्युम् अनुगृह्य अश्विनौ अन्तरधत्ताम् । उपमन्युः सद्यः सालोकनेत्रो भव कूपान्निर्गत्य गुरोः पादमूलमुपागात् ।

धौम्यस्तस्य वृत्तान्तं श्रुत्वा प्रीतस्तं--"सर्वशास्त्रपारंगतो यशस्वी भव"--इत्यनुजग्राह । सद्यः स विदितवेदितव्यः कृतकृत्यश्चाभवत् ।

## शब्दार्थ

न्ययुङ्क्त = लगाया। शाद्वलवतीषु=हरे घास वाली। निशामुखे= सायंकाल में। गोष्ठे=गोशाला में। उपासदत्=पास आया। अन्वयुंक्त= पूछा। किमाहारः=क्या खानेवाला। द्विः=दो बार। गृहिणाम्= गृहस्थों को। समग्रा=सारी। पीनः=मोटा। तर्णकाः=बछड़े। परेद्यवि=दूसरे दिन। स्तुहि=प्रशंसा करो। अशान=खाओ। अनुजग्राह= अनुग्रह किया। विदितवेदितव्यः=जानने योग्य को जाना हुआ। कृतकृत्यः= कृतार्थ।

## अभ्यास

(क) धौम्य ने उपमन्यु को भिक्षा आदि से हटाने की चेष्टा क्यों की ?

(ख) उपमन्यु कूएँ में कैसे गिरा ? और उसने दुबारा दर्शन शक्ति कैसे प्राप्त की ?

१—गुरवे। आवाभ्यां। यशस्वी। अश्विनौ। गृहिणां—इन पदों की विभक्ति और वचन लिखो।

२—अपृच्छत्। वर्तयसि। दृश्यते—इनका लकार, पुरुष और वचन लिखो।

३—पीनगात्रम्। किमाहारः। भैक्षवृत्तिम्। सालोकनेत्रः—इनका समास तथा विग्रह दिखाओ।

---

# जानश्रुत्युपाख्यानम्

जानश्रुतिः पौत्रायणो नाम एको राजा श्रद्धापूर्वं बहुदानशीलः प्रियातिथिर्बभूव । स च 'सर्वतः आगताः अतिथयो ममैवान्नपानम् उपयोक्ष्यन्ते' इत्यभिप्रायवान् तेषु तेषु नगरग्रामशृङ्गाटकेषु अन्नपानादिसुसज्जितान् भूरि आवसथान् कारयामास। एकदा निदाघे निशि स राजा स्वहर्म्योपरि शयान आसीत् । तस्य दानशौण्डस्य गुणगरिम्णा संतोषिताः देवर्षयः तदनुग्रहाय विहायसि तदुपरि मालामाबद्धय आजग्मुः। तेषामग्रेसरं हंसं सम्बोध्य पृष्ठतः पतन् एकतमः हंसः उवाच–भो मन्दमते भल्लाक्ष! अस्य जानश्रुतेः द्युलोकपर्यन्तं तेजः व्याप्तमस्ति, तत्सक्तिं मा कुरुः तत्संगेन हि तव दाहो भविष्यति। अतः मार्गान्तरेणैव गन्तव्यम्–इति ।

तमेवमुक्तवन्तं पृष्ठगामिनं हंसं पुरोगामिहंसः प्रत्युवाच–सशकटस्य रैक्वस्य ज्योतिः असह्यमस्ति, यथा सर्वं एव वेत्ति, न तु एतस्य वराकस्य प्राणिमात्रस्य । अतः किमिति त्वम् एनं वराकं तथा रैक्ववत् महामहिमशालि-

तया प्रस्तौषि ? इत्यभिधाय हंसरूपमास्थितास्ते ऋषयः प्रतिन्यवर्तन्त ।

अथैष जानश्रुतिः हंसवचनात् आत्मानः अत्यन्त-निकर्षम्—उत्कर्षकाष्ठाञ्च रैक्वस्य उपश्रुत्य विषण्ण-मानसः अक्षपराजितः कितव इव भूयो भूयः निश्श्वसन् कथं कथमपि निशीथमतिवाहयाम्बभूव। ततो निशावसाने वन्दारुवृन्दकृतेन स्तुतिसहस्रेण संवलितं मंगलतूर्यनिर्घोष-माकर्ण्य तल्पतलात् उत्तिष्ठन्नेव राजा क्षत्तारमादिदेश—वयस्य ! यस्य धर्मे सर्वे धर्माः अन्तर्भवन्ति तादृशो महर्षिः रैक्वनामा अस्ति। तं क्वचित् उचितप्रदेशे एकान्ते नदीपुलिनादौ विद्यमानं परिशोध्य मह्यं निवेदय। स च तत्र तत्र अन्विष्यन् क्वचित् अतिविविक्ते देशे शकटस्य अधस्तात् पामानं कण्डूयमानं भार्याधनादिरहितं ब्राह्मणमद्राक्षीत्। दृष्ट्वा च तं—रैक्वोऽयं भविता,—इति प्रतिभावान् सविनयं पप्रच्छ—त्वमसि हे भगवन् ! सशकटः रैक्वः ? इति। तस्य च तैस्तैरिङ्गितैः रैक्व-भावानुमतिं च उन्नीय स यन्ता राज्ञे निवेदयामास। राजा तु तं निशम्य गवां षट्शतानि, हारं, रथञ्च

आदाय सत्वरं प्रतिचक्रमे। गत्वा च अभ्युवाच—हे रैक्व! एतत् सर्वं गृहाण, अनुशाधि च मां भगवन्, इति।

अथ रैक्वः तस्य दानशीलतां विनयञ्चावलोक्य शूद्रयोनिजाताय अपि तस्मै स्वोपास्यां देवतामुपदिदेश।

## शब्दार्थ

**उपयोक्ष्यन्ते**=प्रयोग करेंगे। **शृङ्गाटकेषु**=चौरास्तों में। **निदाघे**=गर्मी की मौसम में। **निशि**=रात के समय में। **द्युलोकपर्यन्तम्**=स्वर्ग तक। **पुरोगामी**=आगे चलने वाला। **महामहिमशालितया**=बड़ी महिमा वाले के रूप में अथवा इस तरह जैसे कि यह बड़ी महिमा वाला हो। **अक्षः**=पासा। **कितव इव**=जुआरी की तरह। **क्षत्तारम्**=सेवक को। **निकर्ष**=छोटेपन को। **प्रतिन्यवर्तन्त**=प्रति+नि+अवर्तन्त=वापस गये। **अति विविक्ते देशे**=बहुत ही निर्जन वा अलग जगह पर। **वन्दारुः**=स्तुति पाठ करने वाला। **तूर्यम्**=बाजे। **कण्डूयमानम्**=खुजलाते हुए को। **इति**=इस, **प्रतिभावान्**=विचार वाला, **इंगिताः**=इशारे। **अनुशाधि**=शिक्षा दो। **निशीथम् अतिवाहयाम्बभूव**=रात बिताई। **आवसथान्**=विश्राम की जगह।

## अभ्यास

(क) राजा पर देवर्षियों की प्रसन्नता का क्या कारण है ?

(ख) उनका आपस में क्या वार्तालाप हुआ ?

(ग) उनकी बातचीत से राजा पर कैसा प्रभाव पड़ा ?

(घ) राजा तथा रैक्व के कथोपकथन का सारांश दो।

१—'एको राजा'। 'प्रियातिथिर्बभूव'। 'तदुपरि'। 'अथैष'—इनमें संधिच्छेद करो।

२—रेखाङ्कित पदों में समास तथा लौकिक विग्रह दिखाओ:—

श्रद्धापूर्वम्। नगरग्रामशृङ्गाटकेषु। हर्म्योपरि। देवर्षयः। विषण्णमानसः। अक्षपराजितः। स्तुतिसहस्रेण। सविनयम्। सशकटः।

३—शयानः। गन्तव्यम्। आकर्ण्य—इनकी प्रकृति बताकर इन धातुओं के क्तवतु प्रत्ययान्त रूप बताओ।

४—उपयोक्ष्यन्ते। न्यवर्तन्त। कुरु। वेत्ति—इनके धातु, लकार, पुरुष और वचन बताओ।

५—पतन्। एकतमः। निश्वसन्। उपविश्य। उन्नीय—इनमें प्रकृति प्रत्यय का विश्लेषण कीजिये।

६—उपसर्ग धातु के आदि में लगाया जाता है या अन्त में?

७—अधोलिखित पदों में उपसर्ग पृथक् करो।

सुसज्जित, अनुग्रह, उपयोक्ष्यन्ते, संतोषित, न्यवर्तन्त।

# हास्यविद्यकथा

बभूव काञ्ची नाम राजधानी। तस्याञ्च सुप्रतापो नाम राजा। तत्रैकदा कस्यापि धनिकस्य धनं चोरयन्तः चत्वारः चौराः सन्धिद्वारे प्रशास्तृपुरुषैः प्राप्ताः शृङ्खलेन बद्ध्वा राज्ञे निवेदिताश्च। राजा च घातकपुरुषान् आदिदेश—रे रे घातकपुरुषाः! चतुरोऽपि चौरानेतान् नगराद् बहिर्नीत्वा शूलमारोप्य मारयत।

तथाहि—

संवर्धनं च साधूनां दुष्टानां मर्दनं तथा।
राजधर्मं बुधाः प्राहुः दण्डनीतिविचक्षणाः॥

ततो राजाज्ञया घातकपुरुषैः त्रयः चौराः शूलमारोप्य हताः। चतुर्थेन चिन्तितम्—

यद् मरणे प्रत्यासन्नेऽपि रक्षोपायः सुधिया विधेय एव, उपाये सफले सति रक्षा तु नियतमेव भविष्यति। एतद् विचार्य चौर उवाच—रे रे घातकपुरुषाः!! त्रयः चौराः युष्माभिर्हता एव, इदानीं राजाग्रे मद्वचनं श्रावयित्वा मां मारयत। यतोऽहं महतीमेकां विद्यां जानामि।

मयि मृते च साऽस्तं यास्यति, राजा तु तां गृहीत्वा मां मारयतु। तथा च सा विद्या मर्त्यलोके स्थास्यति।

घातकाः--रे चौर! पुरुषाधम!! वधस्थानमानीतोऽसि। किमितोऽपि जीवितुमिच्छसि? कां विद्यां जानासि? कथं वा तव अधमस्य विद्या भूपालेन गृहीतव्या?

चौरः--रे घातकाः! किं ब्रूथ? राज्यकार्यबाधां कर्तुमिच्छथ? यदि राजा ज्ञास्यति, तदा अवश्यं तेन गृहीतव्या महतीयं विद्या। किञ्च विद्यावार्ताकथकेभ्यः युष्मभ्यमपि प्रभुणा प्रसादः कृतो भविष्यति।

ततस्तस्य चौरस्य वचनैः स्वामिकार्यानुरोधेन घातकैः सा वार्ता राज्ञे निवेदिता। राजा च कौतुकमाकर्ण्य चौरमाहूय पप्रच्छ।

राजा--रे! कां विद्यां जानासि?

चौरः--देव! सुवर्णकृषिं जानामि।

राजा--का परिपाटी?

चौरः--देव! सर्षपमात्राणि सुवर्णबीजानि कृत्वा भूमौ उप्यन्त, माससमात्रेण च सर्षपसदृश्य एव कन्दल्यो भवन्ति। देवः प्रत्यक्षं पश्यतु।

राजा—चौर ! सत्यमेतत् ?

चौरः—देवस्य पुरतः कस्यासत्यभाषणे शक्तिः ? यदि मम वचनं व्यभिचरति तदा मासान्ते ममाप्यन्तो भविष्यति । तदापि देवः शास्तिकरणे च प्रभुरेव स्थास्यति ।

राजा—भद्रम्, वप सुवर्णम् ।

ततः चौरः सुवर्णं दाहयित्वा सर्षपमात्राणि बीजानि कृत्वा राजान्तःपुरक्रीडासरसः तटे परमनिगूढस्थाने भूपरिष्कारं कृत्वा च बभाषे ।

चौरः—देव ! क्षेत्रबीजे सम्पन्ने । वप्ता कश्चिद् दीयताम् ।

राजा—त्वमेव कुतो न वपसि ?

चौरः—यदि सुवर्ण-वपने ममाप्यधिकारो भवति ततः किमहं दुःखी भवामि ? किन्तु सुवर्णवपने चौरस्य अधिकारो नास्ति । येन कदापि किमपि न चोरितम् अस्ति, स वपतु । देव एव च किं न वपति ?

राजा—मया चारणेभ्यः दातुं तातचरणानां धनं चोरितम् ।

चौरः—तर्हि मन्त्रिणो वपन्तु ।

मन्त्रिणः--वयं राजोपजीविनः कथम् अस्तेयिनो भवामः ?

चौरः--तर्हि धर्माधिकारी वदतु ।

धर्माध्यक्षः--मयापि शैशवे मातुः मोदकाश्चोरिताः ।

तदनन्तरं चौर उवाच--यूयं सर्वेऽपि चौराः । कथमहमेव मारणीयोऽस्मि ? तस्य वचनं श्रुत्वा सभासदः सर्वेऽपि जहसुः । राजापि हास्यरसापनीतक्रोधः विहस्य आह--'रे चौर ! न मारणीयोऽसि । हे मन्त्रिणः ! कुबुद्धिरपि बुद्धिमानयम् चौरः हास्यरसप्रवीणश्च । ततो ममैव सन्निधाने तिष्ठतु, प्रस्तावे च मां हासयतु मोदयतु च ।' ततः स चौरः राज्ञा स्वसंनिधाने धृतः ।

## शब्दार्थ

प्रशास्तृपुरुषैः=सिपाहियों से । शृङ्खलेन=संगली से । शूलमारोप्य=सूली पर चढ़ाकर । विचक्षणाः=चतुर । श्रावयित्वा=सुनाकर । पुरुषाधमः=नीच आदमी । वधस्थानम=मारने की जगह । हासविद्यः=हँसी विनोद की कला जाननेवाला । वार्ताकथकेभ्यः=बातें सुनाने वालों के लिये । परिपाटी=रिवाज । सर्षपमात्राणि=सरसों भर । उप्यन्ते=बोये जाते हैं । कन्दल्यः=अंकुर । व्यभिचरति= उलट जाता है । दाहयित्वा=जलाकर । परिष्कारः=सफाई । चारणेभ्यः=घूम घाम कर यश फैलाने वालों क लिये ।

## अभ्यास

(क) राजा तथा चोर के वार्तालाप को संक्षेप में लिखो।

(ख) राजा ने उसे अपने पास क्यों रख लिया ?

१—राजा। चत्वारः। त्रयः। सुधिया। माम्। तेन। मया। वयम्। मातुः—इन पदों की विभक्ति और वचन लिखो।

२—बभव। आदिदेश। मारयत। जानामि। इच्छथ। जहसुः। यास्यति—इनका परिचय दो।

३—बद्ध्वा। चिन्तितम्। आरोप्य। जीवितुम्। चोरितुम्। दातुम्। धृतः—इन पदों में प्रकृति प्रत्यय को पृथक् करो।

४—इस पाठ में आये हुए समास युक्त पदों का अन्वेषण करके नाम लिखिये तथा विग्रह लिखिये।

५—येन कदा किमपि न चोरितम्—इसका वाच्य-परिवर्तन करो।

---

# नीतिपद्धतिः

अनुगन्तुं सतां वर्त्म कृत्स्नं यदि न शक्यते ।
स्वल्पमप्यनुगन्तव्यम् मार्गस्थो नावसीदति ॥१॥

यः समुत्पतितम् क्रोधं मानं चापि नियच्छति ।
स श्रियो भाजनं पुंसां यश्चापत्सु न मुह्यति ॥२॥

सुहृदोऽप्यरयः तस्य यस्यात्मा दुरधिष्ठितः ।
अजीर्णे पथ्यमप्यन्नं व्याधये मरणाय वा ॥३॥

असहायः समर्थोऽपि तेजस्वी किं करिष्यति ।
निवाते ज्वलितोऽप्यग्निः स्वयमेवोपशाम्यति ॥४॥

नास्ति जात्या रिपुर्नाम मित्रं चापि न विद्यते ।
सामर्थ्ययोगाज्जायन्ते मित्राणि रिपवस्तथा ॥५॥

नोदन्वानर्थितां याति न चाम्भोभिर्न पूर्यते ।
आत्मा तु पात्रतां नेयः पात्रमायान्ति सम्पदः ॥६॥

प्रज्ञया मानसं दुःखं हन्याच्छारीरमौषधैः ।
एतद् विज्ञाय सामर्थ्यं न बालैः समतामियात् ॥७॥

गुणेषु यत्नः कर्त्तव्यः किमाटोपैः प्रयोजनम् ।
विक्रीयन्ते न घण्टाभिर्गावः क्षीरविवर्जिताः ॥८॥

उत्पन्नपरितापस्य बुद्धिर्भवति यादृशी ।
तादृशी यदि पूर्वं स्यात् कस्य न स्यात् फलोदयः ॥९॥
वनानि दहतो वह्नेः सखा भवति मारुतः ।
स एव दीपनाशाय क्षीणे कस्यास्ति सौहृदम् ।१०॥
गच्छन्पिपीलको याति योजनानां शतान्यपि ।
अगच्छन् वैनतेयोऽपि पदमेकं न गच्छति ॥११॥
किं नु मे स्यादिदं कृत्वा किं नु न स्यादकुर्वतः ।
इति संचिन्त्य मनसा प्राज्ञः कुर्वीत वा न वा ॥१२॥
न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत् ।
विश्वासाद् भयमुत्पन्नं मूलान्यपि निकृन्तति ।१३॥
बहूनामल्पसाराणां समवायो हि दुर्जयः
तृणैरावेष्टयते रज्जुस्तया नागोऽपि बध्यते ॥१४॥
कौर्मं संकोचमादाय प्रहारानपि मर्षयेत् ।
प्राप्तकाले तु मतिमानुत्तिष्ठेत् कृष्णसर्पवत् ॥१५॥
आदरात् संगृहीतेन शत्रुणा शत्रुमुद्धरेत् ।
पादलग्नं करस्थेन कण्टकेनैव कण्टकम् ॥१६॥
कोऽतिभारः समर्थानाम् ? किं दूरं व्यवसायिनाम् ?
को विदेशः सविद्यानाम् ? कः परः प्रियवादिनाम्? ॥१७॥

कः कालः कानि मित्राणि, को देशः कौ व्ययागमौ ।
को वाऽहं का च मे शक्तिः, इति चिन्त्यं मुहुर्मुहुः ॥१८॥

उत्साहसम्पन्नमदीर्घसूत्रम्,
क्रियाविधिज्ञम् व्यसनेष्वसक्तम् ।
शूरं कृतज्ञं दृढसौहृदञ्च
लक्ष्मीः स्वयं याति निवासहेतोः ॥१९॥

जितेन्द्रियत्वं विनयस्य कारणम्,
गुणप्रकर्षो विनयादवाप्यते ।
गुणाधिके पुंसि जनोऽनुरज्यते,
जनानुरागप्रभवा हि सम्पदः ॥२०॥

## शब्दार्थ

मार्गस्थः=रास्ते में रहनेवाला । समुत्पतितम्=उठे हुए । दुरधिष्ठितः=दूषित है । असहायः=बिना सहारे के । उदन्वान्=समुद्र । पात्रता=योग्यता । फलोदयः=फल की प्राप्ति । पिपीलकः=चींटी । वैनतेयः=गरुड़ । निकृन्तति=काटता है । दुर्जयः=मुश्किल से जीतने लायक । उद्धरेत्=उठावे । अदीर्घसूत्रम्=फुर्तीला । कृतज्ञम्=धन्यवादी । क्रियाविधिज्ञम्=काम के ढंग को जानने वाले को । नोदन्वानर्थितां याति=समुद्र कभी मांगने वाला नहीं बनता । नियच्छति=रोक लेता है । वर्त्म=रास्ता । निवाते=बिना हवा की जगह । पात्र=योग्य । बाल=मूढ । आटोप=आडम्बर ।

## अभ्यास

(क) कैसा आदमी दुःख नहीं पाता ?
(ख) कौन सम्पत्ति का पात्र बनता है ?
(ग) शत्रु व मित्र कैसे बनते हैं ?
(घ) मानसिक और शारीरिक दुःख कैसे दूर किये जाते हैं ?

१—विक्रीयन्ते न घण्टाभिर्गावः क्षीरविवर्जिताः ।
इसका आशय बताओ ।

२—समुत्पतितम् । श्रियः । यस्य । रिपवः । तादृशी । कस्य । अकुर्वत—
इनके शब्द, विभक्ति और वचन बताओ ।

३—निम्नलिखित शब्दों में संधिविच्छेद करो—
सुहृदोप्यरयः । स्यादिदम् ।

४—अनुगन्तव्यम् । नेयः । चिन्त्यम्—
इनमें प्रकृति प्रत्यय बताकर इनका प्रयोग अपने वाक्य में करो ।

५—अवसीदति । नियच्छति । मुह्यति । उपशाम्यति । विद्यते । विक्रीयन्ते । गच्छति—इन क्रियाओं के धातु और लकार बताओ ।

६—दुरधिष्ठितः । समार्थ्ययोगात् । फलोदयः । उत्पन्नपरितापस्य—इनका विग्रह करो और समासों के नाम बताओ ।

---

# नाचिकेतसोपाख्यानम्

वाजश्रवसस्य ऋषेर्नचिकेता नाम पुत्र आसीत् एकदा वाजश्रवसः यज्ञेजरतीः धेनूः दक्षिणात्वेन कल्पयामास। नचिकेताश्च तादृश्या निकृष्टदक्षिणया पितुः यज्ञस्य विफलतां मन्वानः आत्मप्रदानेन वाजश्रवस-यज्ञं सफलं कारयिष्यामि--इति मनसि निधाय--हे तात! मां कस्मै दास्यसि ?--इति पितरं पुनः पुनः पप्रच्छ। तेन भूयो भूयः पृच्छचमानः वाजश्रवसः क्रुद्धः सन्--"त्वां मृत्यवे ददामि"--इति प्रत्युवाच।

तदनन्तरं "सत्पुत्रस्य यमाय समर्पणं कथं कृतम्" इति अनुशयानम् स्वपितरमालक्ष्य नचिकेताः प्राह--"हे पितः! इदं शरीरं कतिपय-दिवस-स्थायि सत् नश्वरम्। प्राचीनाः अपि अस्मिन् आसक्त्या परिपालितं सत्यं त्यक्तुं नोदसहन्त। अतः मां यमं प्रति प्रेषय"--इति। तस्य वचसा प्रभावितः वाजश्रवसः तं यमसदने उपस्थातुमनुज्ञातवान्। स च अनश्नन्नेव यमनिकेतने तिस्रः रात्रीः

उवास । तथाभूतं तमवलोक्य यमः मनसि व्यचिन्तयत् "यत् अयमभुञ्जान एव मम गृहे तिस्रो रात्रीः उषितवानस्ति इति हेतोः मत्तः त्रीन् वरान् आदातुं सर्वथा अर्हति"- इति विचार्य यमः प्राह--हे वत्स ! कानपि त्रीन् वरान् प्रार्थय । ततः तद्वचनेन प्रीतो नचिकेताः स्वजीवनं सफलं मन्यमानः यमं प्रत्युवाच--"भगवन् ! पुनरितः प्रतिनिवृत्तं मा तातः 'पुत्र' इति न प्रत्यभिज्ञास्यति तथा प्रत्यभिज्ञातवानपि वा--"मदाज्ञामुल्लंघ्य पुनर्गृहं प्रत्यागतवान्"--इति कुपितः स्यात् । अतः यथापि तदुभयं मा भूत् तथा प्रथमवरेण मामनुगृहाण" । यमेनापि 'तथा' इत्युक्तम् । ततः अग्निविद्या-विषयकं प्रश्नं कृत्वा नचिकेताः तदुत्तररूपेण द्वितीय-वरमपि लब्धवान् ।

अथ तृतीयवरेण च स यमं "मरणानन्तरमयमात्मा अस्ति न वा ?" इति संदेहं परिशोधयितुं प्रार्थयामास । यमस्तु तत्त्वज्ञानस्य दुर्ज्ञेयतां प्रतिपादयन् नचिकेतसं प्रश्नान्तरं कर्तुं कथयामास । नचिकेतास्तु यमेन तथा निरुत्साहितोऽपि स्वप्रश्नग्रहं न मुमोच । तदानीम् यमः पुनः तस्य ज्ञानपिपासां परीक्षितुं तमुवाच--हे वत्स !

शतायुषः पुत्रपौत्रान्, भूमेः एकच्छत्रसाम्राज्यं आत्मनश्च दीर्घजीवनम्। अथवा भूलोकस्थितैः मर्त्यैः लब्धुमशक्याभिः देवाङ्गनाभिः पादसंवाहनादिना शुश्रूषितः सन् इहैव स्वर्गे चिरनिवासं कामं याचस्व, परं हे नचिकेतः! मरणसम्बद्धप्रश्नं मा कार्षीः।

नचिकेता आह—हे अन्तक! आगामिदिवसेऽपि येषां सत्ता सन्दिह्यते तथाभूताः इमे रामादयो भोग्याः स्वसम्बद्धस्य पुरुषस्य सर्वेन्द्रियाणाम् तेजः जरयन्ति, अपि चेदं जीवितं स्वल्पमेव, अतः भवानेव इमान् वाहान् नृत्यगीते च रोचयताम्। मम तु पुनः आत्मज्ञानमेव प्रेयः।

इत्थं शमदमाभ्याम् वैराग्येण च साधनेन सुसम्पन्नं नचिकेतसं आत्मज्ञानाधिकारिणं मत्त्वा यमः तत्त्वज्ञानमध्यापयामास।

## शब्दार्थ

जरती=बूढ़ी। दक्षिणात्वेन=दक्षिणा के रूप में। निधाय=रखकर। अनुशयानम्=पछताते हुए। आलक्ष्य=जानकर। यमसदने यम के घर में। उपस्थातुम्=उपस्थित होने को। परिशोषयितुं=हटाने के लिए। दुर्ज्ञेयताम्=जानने में कठिनाई को। हे अन्तक=यम। यमनिकेतने=यम के घर में। उल्लंघ्य=उलांघकर।

## अभ्यास

(क) पिता के यज्ञ को नचिकेता ने क्यों नहीं सफल माना, और उसे कैसे सफल किया ?

(ख) पिता ने पुत्र को जब यम-सदन जाने की अनुमति दे दी तो उसने वहां जाकर क्या किया ?

(ग) यम ने कौन तीन वर दिये ?

(घ) यम ने नचिकेता को प्रलोभन क्यों दिये ?

(ङ) यम तथा नचिकेता का संवाद लिखो ?

१—अनश्नन् + एव। पुत्रः + आसीत्। अयम् + अभुञ्जानः + एव। विप्रः + अचिन्तयत्। इनमें संधि करो।

२—आसीत्। कारयिष्यामि। प्रेषय। उवास। अवरीष्ट। पप्रच्छ। कार्षीः। अध्यापयामास। इन क्रियाओं के धातु, लकार पुरुष और वचन दिखाओ।

३—पृच्छ्यमानः। प्रत्यभिज्ञातवान्। विचार्य। मन्यमानः। उषितवान्। त्यक्तम्। इनमें प्रकृति प्रत्यय बताओ।

४—तिस्रः। रात्रीः। कस्मै। मम। मनसि—इन पदों के लिङ्ग-निर्देश-पर्वक विभक्ति और वचन लिखो।

५—शानच् तथा शतृ प्रत्यय में क्या अन्तर है ?

---

# आषाढभूतिः

आसीत् कस्मिंश्चिद्विविक्ते प्रदेशे मठायतनम्। तत्र देवशर्मा नाम परिव्राजकः प्रतिवसति स्म। तस्यानेकसाधुजनदत्तसूक्ष्मवस्त्रविक्रयवशात् कालेन महती वित्तमात्रा संजाता। ततः स न कस्यचिद्विश्वसिति। नक्तंदिनं कक्षान्तरात् तां मात्रां न मुञ्चति।

अथाषाढभूतिर्नाम परवित्तापहारी धूर्तस्तामर्थमात्रां तस्य कक्षान्तर्गतां लक्षयित्वा—"कथं मयास्य इयमर्थमात्रा हर्तव्या"—इति विचिन्तयन् तस्यान्तिकमुपगम्य, 'ओम्, नमः शिवाय"—इति प्रोच्चार्य साष्टाङ्गं प्रणम्य च सप्रश्रयमुवाच—"भगवन्, असारः संसारोऽयम्। गिरिनदीवेगोपमं यौवनम्। तृणाग्निसमं जीवितम्। शरदभ्रच्छायासदृशाः भोगाः। स्वप्नसदृशः पुत्रमित्रकलत्रभृत्यवर्गसंबन्धः। एवं मया सम्यक् परिज्ञातम्। तत्किं कुर्वतो मे संसारसमुद्रोत्तरणं भविष्यति ?"—इति।

तत् श्रुत्वा देवशर्मा सादरमाह—"वत्स, धन्योऽसि

यत्प्रथमे वयस्येवं विरक्तभावः। यच्च मां संसारसागरोत्तरणोपायं पृच्छसि।"

तत् श्रुत्वा आषाढभूतिस्तत्पादौ गृहीत्वा सप्रश्रयमिदमाह—"भगवन्! तर्हि दीक्षया मे अनुग्रहं कुरु।"

देवशर्मा आह—"वत्स, अनुग्रहं ते करिष्यामि। परंतु रात्रौ त्वया मठमध्ये न प्रवेष्टव्यम्। यत्कारणं निःसङ्गता यतीनां प्रशस्यते तव च ममापि च। तत् त्वया व्रतग्रहणानन्तरं मठद्वारे तृणकुटीरके शयितव्यम्"—इति।

स आह—"भगवन्! भवदादेशः प्रमाणम्। परत्र हि तेन मे प्रयोजनम्।"

अथ कृतशयनसमयमाषाढभूतिं देवशर्मा अनुग्रहं कृत्वा शास्त्रोक्तविधिना शिष्यतामनयत्। सोऽपि हस्तपादावमर्दनादिपरिचर्यया तं परितोषमनयत्। पुनस्तथापि मुनिः कक्षान्तरान्मात्रां न मुञ्चति।

अथैवं गच्छति काले देवशर्मणः शिष्यपुत्रः कश्चित् ग्रामादामन्त्रणार्थं समायातः। प्राह च—"भगवन्! पवित्रारोपणकृते मम गृहमागम्यताम्"—इति। तत् श्रुत्वा देवशर्मा आषाढभूतिना सह प्रहृष्टमनाः प्रस्थितः।

अथैवं तस्य गच्छतः अग्रे काचिन्नदी समायाता। तां दृष्ट्वा मात्रां कक्षान्तरादवतार्य कन्थामध्ये सुगुप्तां निधाय आषाढभूतिमिदमाह—"भोः आषाढभूते, यावदहं बहिर्भूमिं गत्वा स्नात्वा देवार्चनादिकं विधाय समागच्छामि तावदेषा कन्था योगेश्वरस्य सावधानतया रक्षणीया"—इत्युक्त्वा गतः।

आषाढभूतिरपि तस्मिन्नदर्शनीभूते मात्रामादाय सत्वरं प्रस्थितः। देवशर्माऽपि छात्रगुणानुरञ्जितमनाः सविश्वस्तो यावदनुष्ठानादिकं निर्वर्त्य शनैः शनैः निवृत्तो यदा आषाढभूतिं न पश्यति, कन्थां च नालोकयति, तदा "हाहा !! मुषितोऽस्मि" इति जल्पन् पृथिवीतले मूर्छया निपपात। ततः क्षणात् चेतनां लब्ध्वा भूयोऽपि समुत्थाय फूत्कर्तुमारब्धः—"भो आषाढभूते ! क्व मां वञ्चयित्वा गतोऽसि ? तद्देहि मे प्रतिवचनम्।"

एवं बहु विलप्य तस्य पदपद्धतिमलभमानः वित्तनाशसमुद्भूतशोकविकलः पुनरपि स्वकीयं मठायतनं जगाम।

प्रमादिनं गृहोपान्ते परद्रव्यापहारिणः।
सामादिसज्जितैः पाशैः प्रतीक्षन्ते दिवानिशम्॥

## शब्दार्थ

परिव्राजकः=संन्यासी । नक्तंदिनम् =रातदिन । कक्षः=कोंख । साष्टाङ्गम् =आठों अंगों सहित । सप्रश्रयम्=नम्रता के साथ । यत्कारणम् =क्योंकि । सुगुप्ता=सुरक्षित । अदर्शनीभूते=ओझल हो जाने पर । निर्वर्त्य=करके । मुषितः=लुट गया । जल्पन् =विलाप करते । सज्जितैः=तैयार किये हुए । पाशैः=बन्धनों से ।

## अभ्यास

(क) देवशर्मा रात के समय छात्रों को मठ के भीतर प्रवेश क्यों नहीं करने देता था ?

(ख) आषाढ़भूति ने देवशर्मा का किस तरह विश्वास-पात्र बनकर उसे धन-मात्रा से वञ्चित किया ?

(ग) इस कथा से किस नीति का उपदेश मिलता है ?

१—जल्पन् । मुषितः । विलप्य । लब्ध्वा । उत्थाय । रक्षणीयः । प्रोच्चार्य—इनमें प्रकृति प्रत्यय का परिचय दो ।

२—तृणाग्निसमम् । संसारसमुद्रोत्तरणम् । साधुजनदत्तसूक्ष्मवस्त्रविक्रयः । छात्रगुणानुरञ्जितमनाः । पदपद्धतिः—इनमें समास तथा विग्रह दिखाओ ।

३—पद्धतिम् । अपहारिणः । प्रहृष्टमनाः । मूर्च्छया । कुर्वतः । वयसि—इनमें लिंग, वचन और विभक्ति का निदश करो ।

---

# अविमारके विदूषकचन्द्रिकयोः संल्लापः

(ततः प्रविशति विदूषकः)।

विदूषकः--भोः, न जानन्त्यवस्थाविशेषम् ईश्वरपुत्रा नाम। अतस्तत्रभवान् अविमारकः ऋषिशापेन कुलपरिभ्रंशम् अन्त्यजकुलप्रवासम् आत्मनो विज्ञानं गुरुजनं च अचिन्तयन् यदा हस्तिसंभ्रमदिवसे कुन्तिभोजदुहिता कुरङ्गी दृष्टा, तदा प्रभृत्यन्यादृश इव संवृत्तः। ही, ही, किं बहुना, मयापि सह गोष्ठीं नेच्छति। सर्वकालं चिन्तयन्नभिरमते। सत्यः खलु लोकप्रवादः--'सङ्कचारिणोऽनर्थाः'--इति। कोऽत्र संबन्धः, सा राजदारिका स्वयमन्त्यज इति प्रच्छन्नः। अहमपि तावद् ब्राह्मणपरिवादं परिहरन् ब्राह्मणकुलेषु परिभ्रम्य प्रच्छन्नः तत्रभवत आवासमेव गच्छामि।

(ततः प्रविशति चेटी।)

चेटी--एतस्मिन् अवस्थापरि दृष्टे राजकुले अबहुकार्यतया नगरं प्रेक्षितुं निर्गतास्मि। (परिक्रम्यावलोक्य) अयि, एष आर्यः संतुष्टो गच्छति। भवतु, एतेन सह

हसन्ती मुहूर्तकं निर्वेदं विनोदयामि । (उपसृत्योर्ध्व-मवलोक्य) हला, कौमुदिके, किं लब्धो ब्राह्मणः ? किं भणसि 'न लभे' इति ।

विदूषकः—चन्द्रिके, किमेतत् ?

चेटी—आर्य, कञ्चिद् ब्राह्मणमन्वेषे ।

विदूषकः—ब्राह्मणेन किं कार्यम् ?

चेटी—किमन्यत् ? भोजनार्थं निमन्त्रयितुम् ।

विदूषकः—भवति ! अहं कः श्रमणकः ?

चेटी—त्वं किलावैदिकः ।

विदूषकः—कस्मादहमवैदिकः ? शृणु तावत् । अस्ति रामायणं नाम नाटचशास्त्रम् । तस्मिन् पञ्च श्लोका असंपर्णे संवत्सरे मया पठिताः ।

चेटी—जानामि, जानामि । आर्यस्य कुलोचितः। ईदृशो मेधाविभावः ।

विदूषकः—न केवलं श्लोका एव, तेषामर्थोऽपि ज्ञातः अन्यच्च । अपरो विशेषः, ब्राह्मणो दुर्लभोऽक्षरज्ञः अर्थज्ञश्च ।

चेटी—तेन हि भण, किं नामैतदक्षरम् ?

(नाममुद्रिकां दर्शयति ।)

विदूषकः—(आत्मगतम्) अजानानः किं भणि-

ष्यामि ? (विचार्य) एवं तावद् भणिष्यामि। (प्रकाशम्) भवति ! एतदक्षरं मम पुस्तके नास्ति ।

चेटी--यदि न जानासि, अदक्षिणं भुङ्क्ष्व ।

विदूषकः--भवतु भवतु ।

चेटी--पश्यामि तावदार्यस्य अङ्गुलीयकम् ।

विदूषकः--पश्य पश्य मदीयं दर्शनीयम् ।

चेटी--(गृहीत्वा) एष भर्तृदारक इत एवागच्छति ।

विदूषकः--(परावृत्त्यावलोक्य) कुत्र तत्रभवान् ?

चेटी--(स्वगतम्) विलोभितो मुग्धब्राह्मणः । इमं जनसमूहं प्रविश्य चतुष्पथमार्गे वञ्चयित्वा गमिष्यामि ।

(निष्क्रान्ता ।)

विदूषकः--(सर्वतो विलोक्य) चन्द्रिके, चन्द्रिके, कुत्र कुत्र चन्द्रिका ? हा वञ्चितोऽस्मि । गण्डभेददास्याः शीलं जानन्नपि आत्मनो भोजनविस्रम्भेण च्छलितोऽस्मि । (परिक्रम्य) भोजनमप्यलीकं चिन्तयामि । (अग्रतो विलोक्य) हन्तैषा धावति ! तिष्ठ तिष्ठ अधर्मिष्ठदासि ! तिष्ठ । किं धावत्येव ? यावदहमपि धावामि । (धावति) मम पादौ स्वप्ने हस्तिनाऽऽसाद्य-

**मानस्येव तत्र तत्रैव पततः। हन्त कुम्भदास्याः वृत्तान्तं तत्रभवते निवेदयिष्यामि।**

**(निष्क्रान्तः)**

## शब्दार्थ

**नाम**=(अव्यय) सम्भावना के अर्थ में। **अन्त्यजः**=अछूत। **अन्यादृशः**=और सा (अजनबी सा)। **संघचारिणः**=टोलियों में घूमने वाले। **परिवादम्**=निन्दा को। **मुहूर्तकम्**=दो घड़ी मात्र समय। **श्रमणकः**=बौद्ध संन्यासी। **मेधाविर्भावः**=स्मरणशक्ति का प्रकट होना। **अजानानः**=बेखबर। **परावृत्त्य**=लौटकर। **गण्डभेददासी**=खोपड़ी चाटने वाली नौकरानी। **कुम्भदासी**=पानी भरनवाली। **तत्रभवते**=सम्मान सूचित करने के लिये 'अत्रभवान्' 'तत्रभवती' इस तरह के प्रयोग होते हैं।

## अभ्यास

(क) कौमुदिका कौन है? चेटी उसे कहां से बुला रही है?

(ख) चेटी विदूषक को बिना दक्षिणा के भोजन करने के योग्य क्यों समझती है?

(ग) विदूषक की बातों में किस तरह की रोचकता है।

१—कुलभ्रंशम्। अन्त्यजकुलप्रवासम्। भर्तृदारकः। गुरुजनः—इनमें समास और विग्रह दिखाओ।

२—भर्तृ। दासी। दुहितृ। राजदारिका। भवत्—इनके षष्ठी तथा सप्तमी विभक्ति के रूप लिखो।

३—वञ्चयित्वा। विलोभितः। आसाद्यमानः। सञ्चारिणः—इनमें प्रकृति प्रत्यय को पृथक् करो।

४—'ऋते' के साथ कौन विभक्ति आती है?

---

# अन्तर्यामि-वर्णना

यः प्राणे तिष्ठन् प्राणात् अन्तरः, यं प्राणो न वेद, यस्य प्राणः शरीरम्, यः प्राणम् अन्तरः यमयति, एष ते आत्मा अन्तर्यामी अमृतः ।

यो वाचि तिष्ठन् वाचः अन्तरः, यं वाक् न वेद, यस्य वाक् शरीरम्, यो वाचं अन्तरः यमयति, एष ते आत्मा अन्तर्यामी अमृतः ।

यः चक्षुषि तिष्ठन् चक्षुषः अन्तरः, यं चक्षुः न वेद, यस्य चक्षुः शरीरम्, यः चक्षुः अन्तरः यमयति, एष ते आत्मा अन्तर्यामी अमृतः ।

यः श्रोत्रे तिष्ठन् श्रोत्रात् अन्तरः, यं श्रोत्रं न वेद, यस्य श्रोत्रं शरीरम्, यः श्रोत्रम् अन्तरः यमयति, एष ते आत्मा अन्तर्यामी अमृतः ।

यः मनसि तिष्ठन् मनसः अन्तरः, यं मनः न वेद, यस्य मनः शरीरम्, यः मनः अन्तरः यमयति, एष ते आत्मा अन्तर्यामी अमृतः ।

यः त्वचि तिष्ठन् त्वचः अन्तरः, यं त्वक् न वेद, यस्य त्वक् शरीरम्, यः त्वचम् अन्तरः यमयति, एष ते आत्मा अन्तर्यामी अमृतः ।

यो विज्ञाने तिष्ठन् विज्ञानात् अन्तरः, यं विज्ञानं न वेद, यस्य विज्ञानं शरीरम्, यः विज्ञानं अन्तरः यमयति, एष ते आत्मा अन्तर्यामी अमृतः ।

यो रेतसि तिष्ठन् रेतसः अन्तरः, यं रेतः न वेद, यस्य रेतः शरीरम्, यः रेतः अन्तरः यमयति, एष ते आत्मा अन्तर्यामी अमृतः ।

अदृष्टो द्रष्टा, अश्रुतः श्रोता, अमतः मन्ता, अविज्ञातो विज्ञाता, नान्यतोऽस्ति द्रष्टा, नान्यतोऽस्ति श्रोता, नान्यतोऽस्ति मन्ता, नान्यतोऽस्ति विज्ञाता, एष ते आत्मा अन्तर्यामी अमृतः, अतो अन्यदार्तम् । ततः उद्दालकः आरुणिः उपरराम ।

### शब्दार्थ

अन्तर्यामी=भीतर इन्द्रिय मन आदि पर शासन करने वाला । यमयति=वश में करता है । वेद=जानता है । अन्तरः=भीतरी अमृतः=जो मौत का शिकार न हो । अदृष्टः=न देखा गया । द्रष्टा=देखने वाला ।

## अभ्यास

(क) अन्तर्यामी किसे कहत हैं ? अपनी भाषा में अन्तर्यामी के स्वरूप का वर्णन करो ।

१—प्राण, वाच्, मनस्, चक्षुष्, त्वच्—इन शब्दों के चतुर्थी, षष्ठी तथा सप्तमी के रूप लिखो ।

२—'ष्ठा' धातु के लट्, लृट् तथा लङ् लकार के रूप लिखो ।

३—'यमयति' तथा 'वेद' ये किस धातु के लकार के रूप हैं ?



# भोजप्रबन्धे कालिदासस्य कवित्वशक्तिः

एकदा राज्ञा भोजेन विलासार्थम् नूतनगृहान्तरं निर्मापितम्। तत्र गृहान्तरे गृहप्रवेशात् पूर्वमेव एकः कश्चिद् राक्षसः प्रविष्टः। स च तत्र रात्रौ ये वसन्ति तान् भक्षयामास। ततो मांत्रिकान् समाहूय तदुच्चाटनाय राजा यतते स्म। स च आगच्छन्नेव मान्त्रिकानेव अभक्षयत्। किं च स्वयं कवित्वादिकं पर्वमभ्यस्तमेव पठन् तिष्ठति स्म।

एवं स्थिते तत्रैव रक्षसि, राजा 'कथमस्य निवृत्तिः'—इति व्यचिन्तयत्।

तदा कालिदासः प्राह—"देव! नूनमयं राक्षसः सकलशास्त्रप्रवीणः सुकविश्च भाति। अतः तमेव तोषयित्वा कार्यं साधयामि। मांत्रिकास्तिष्ठन्तु, मम मन्त्रं पश्य"—इति। राज्ञा चानुज्ञातः कालिदासः तत्र गत्वा रात्रौ शेते स्म। ततः प्रथमयामे ब्रह्मराक्षसः समायातः। स च अपूर्वं पुरुषं दृष्ट्वा प्रतियामम् एकैकां समस्याम् पाणिनिसूत्रमेव पपाठ। येन उत्तरं हृदयंगमम् नोक्तम्—"अयं न ब्राह्मणः अतः हन्तव्यः"—इति

निश्चित्य तं हन्ति स्म। तदानीमपि पूर्ववत् अयमपूर्वः कश्चित् पुरुषः, अतः सा समस्या पठनीया, न चेद् वदति, सदृशमुत्तरं तस्याः तदा हन्तव्यः--इति बुद्धया पठति--"सर्वस्य द्वे......" इति तदा। कालिदासः प्राह-............"सुमति-कुमती संपदापत्तिहेतुः"। ततः स गतः। पुनरपि द्वितीययामे आगत्य पठति--"वृद्धो यूना........"इति।

तदा कालिदासः उदतरत्--"......सहपरिचयात् त्यज्यते कुट्टिनीभिः" इति। तृतीययामे स राक्षसः पुनस्समागत्य अपठत्--"एको गोत्रे..............." इति।

कविश्चाह--...."स भवति पुमान् यः कुटुम्बं बिभर्ति" ततश्चतुर्थयामे आगत्य स राक्षसः पपाठ--"स्त्री पुंवच्च......" इति।

ततः कविराह-....'प्रभवति यदा तद्धि गेहं विनष्टम्' इति।

ततः स राक्षसः यामचतुष्टयेऽपि स्वाभिप्रायमेव ज्ञात्वा तुष्टः प्रभातसमये समागत्य तमाश्लिष्य प्राह-'सुमते! नितरां तुष्टोऽस्मि, किं तवाभीष्टम्?"-इति।

कालिदासः प्राह--"भगवन्! एतत् गृहं विहाय

अन्यत्र गन्तव्यम्"—इति। सोऽपि 'तथा' इति गतः। अनन्तरं तुष्टो भोजः कविं बहुमानितवान्।

## शब्दार्थ

गृहान्तरम्=और गृह। उच्चाटनाय=उखाड़ने के लिये। मांत्रिकानेव=मन्त्र फूँकने वालों को ही। निवृत्तिः=हटाना। अनुज्ञातः=मंजूर किया आ। प्रतियामम्=हर पहर। कुट्टिनीभिः=बदचलन स्त्रियों से (के द्वारा)।

## अभ्यास

(क) भोज के नवीन गृह में प्रविष्ट राक्षस मनुष्य भक्षण क्यों करता था?

(ख) राजा को शोकातुर देखकर कालिदास ने राक्षस को कैसे निकाला?

(ग) कालिदास पर राक्षस की प्रसन्नता का कारण लिखो।

१—पठन्। निर्मापितम्। तोषयित्वा। हन्तव्यः। मानितवान्—इनमें प्रकृति प्रत्यय का विश्लेषण कीजिये।

२—'पठ्' का लिट् के प्रथम पुरुष में 'भू' का लट् के प्रथम पुरुष में उच्चारण लिखिये।

३—क्त तथा क्तवतु प्रत्यय का प्रयोग पूर्वक अन्तर दिखाओ।

४—चतुष्टयेऽपि। तद्धि। आगच्छन्नेव। सुकविश्च—इनमें सन्धिच्छेन्द करो।

५—समस्या का पूरा श्लोक लिखो।

---

# मैत्रेयी-ब्राह्मणकथा

एकदा ऋषिर्याज्ञवल्क्यः गृहस्थाश्रमात् उत्तमं संन्यासाश्रमं प्रविविक्षुः मैत्रेयीनाम्नीं स्वस्त्रियमाहूय जगाद-"हे मैत्रेयि! मम संन्यासाश्रमप्रवेशे यथा तव सपत्न्या कात्यायन्या सह गोधनादिस्वाम्यविषये कलहो न स्यात् तथा वित्तसंविभागं कर्तुं कामये।

मैत्रेयी तु मुमुक्षुणा पत्या सह चिरसंवासेन तत्परिचरणेन च लब्धचित्तशुद्ध्या सञ्जातमुमुक्षा आसीत्। तथा सति सा याज्ञवल्क्यमपृच्छत्--

"भगवन्! किं वित्तमेतत् मां साक्षादेव अमरभावं नेष्यति? उत एतस्य सद्व्ययेन दानादिना च चित्तशुद्धिः, ततश्च मोक्षेऽधिकारः, इत्थमेतेन परम्परया अमरताप्राप्तिः?

एवं पृष्टो याज्ञवल्क्यः--"वित्तं कथमपि अभीष्टसाधनं नास्ति" इति मैत्रेयीं विबोधयामास।

मैत्रेय्या च "येनाहं नामृता स्याम्, किमहं तेन

कुर्याम् ? यदेव भगवानमृतत्वसाधनं वेद, तदेव ब्रूहि"- इति प्रार्थितः तामित्थमुपदिदेश--

"नवा अरे पत्युः कामाय पतिः प्रियो भवति, आत्मनस्तु कामाय पतिः प्रियो भवति । न वाऽरे जायायै कामाय जाया प्रिया भवति, आत्मनस्तु कामाय जाया प्रिया भवति । न वा अरे पुत्राणां कामाय पुत्राः प्रिया भवन्ति, आत्मनस्तु कामाय पुत्राः प्रिया भवन्ति । न वा अरे वित्तस्य कामाय वित्तं प्रियं भवति, आत्मनस्तु कामाय वित्तं प्रियं भवति । नवा अरे ब्रह्मणः कामाय ब्रह्म प्रियं भवति। आत्मनस्तु कामाय ब्रह्म प्रियं भवति। नवा अरे क्षत्रस्य कामाय क्षत्रं प्रियं भवति, आत्मनस्तु कामाय क्षत्रं प्रियं भवति । नवा अरे लोकानां कामाय लोकाः प्रिया भवन्ति, आत्मनस्तु कामाय लोकाः प्रिया भवन्ति । न वा अरे ! देवानां कामाय देवाः प्रिया भवन्ति, आत्मनस्तु कामाय देवाः प्रिया भवन्ति । नवा अरे भूतानां कामाय भूतानि प्रियाणि भवन्ति, आत्मनस्तु कामाय भूतानि प्रियाणि भवन्ति । नवा अरे सर्वस्य कामाय सर्वं प्रियं भवति, आत्मनस्तु

**कामाय सर्वं प्रियं भवति। आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः। मैत्रेयि! आत्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदितम् ॥५॥**

## शब्दार्थ

**स्वाम्यं**=जायदाद। **प्रविविक्षुः**=प्रवेश करने की इच्छा वाला। **सपत्न्या**=सौकन (सौत) से। **जगाद**=कहने लगा। **मुमुक्षुणा**=मोक्ष की इच्छा करने वाले। **अमरभावम्**=बिना जन्म मरण की अवस्था को। **परिचरणेन**=सेवा से। **स्वाभीष्टं**=अपना चाहा हुआ। **संविभाग**=समान बटवारा।

## अभ्यास

(क) याज्ञवल्क्य स्वाम्य का संविभाग क्यों करन लगे?

(ख) मैत्रेयी को स्वाम्य से अनुरक्ति क्यों नहीं हुई?

(ग) मैत्रेयी के प्रश्न तथा याज्ञवल्क्य के उत्तर का सारांश लिखो।

१—ऋषिर्याज्ञवल्क्यः। संन्यासाश्रमम्—इनमें संधिच्छेद करो।

२—गृहस्थाश्रमात्। संन्यासाश्रमम्। वित्तसंविभागम्। तत्परिचरणेन—इनका विग्रह सहित समास दिखाओ।

३—सह के योग में कौन सी विभक्ति आती है?

४—प्रविविक्षुः। आहूय—इनमें प्रकृति-प्रत्यय बताओ।

५—अपृच्छत्। नेष्यति। विबोधयामास। नास्ति। स्याम्—इन क्रियाओं के धातु, लकार, पुरुष, और वचन बताओ।

६—समास किसे कहते हैं, उसके कितने भेद हैं?

——०——

# सुकन्योपाख्यानम्

पयोष्ण्यां च्यवनो नाम तपस्तेपे महाद्युतिः ।
स्थाणुभूतो महातेजाः वल्मीकेन समावृतः ॥
अथ दीर्घस्य कालस्य शर्यातिर्नाम पार्थिवः ।
आजगाम सरो रम्यं विहर्तुमिदमुत्तमम् ॥
तस्यैव च सुता सुभ्रूः सुकन्या नाम भारत ।
चङ्क्रम्यमाणा वल्मीकं भार्गवस्य समासदत् ॥
ततः सुकन्या वल्मीके दृष्ट्वा भार्गवचक्षुषी ।
कौतूहलात् कण्टकेन बुद्धिमोहबलात्कृता ।
किं नु खल्विदमित्युक्त्वा निर्बिभेदास्य लोचने ॥
अक्रुद्ध्यत्स तथा विद्धे नेत्रे परममन्युमान् ।
ततः शर्यातिसैन्यस्य शकृन्मूत्रे समावृणोत् ॥
सैन्यं सुदुःखितं प्रेक्ष्य पर्यपृच्छत् स पार्थिवः ।
केनापकृतमद्येह भार्गवस्य महात्मनः ॥
तमूचुः सैनिकाः सर्वे न विद्मोऽपकृतं वयम् ।
पितरं दुःखितं दृष्ट्वा सुकन्येदमथाब्रवीत् ॥
मयाऽटन्त्येह वल्मीके दृष्टं सत्त्वमभिज्वलत् ।

खद्योतवदभिज्ञातं तन्मया विद्धमन्तिकात् ॥
एतत् श्रुत्वा तपोवृद्धं चन्द्रादित्यसमप्रभम् ।
अयाचदथ सैन्यार्थं प्राञ्जलिः पृथिवीपतिः ॥
अज्ञानाद् बालया यत्तु कृतं तत्क्षन्तुमर्हसि ।
ततोऽब्रवीन्महीपालं च्यवनो भार्गवस्तदा ॥
अपमानादहं विद्धो ह्यनया दर्पपूर्णया ।
तामेव प्रतिगृह्याहं क्षंस्यामीति ब्रवीमि ते ॥
ऋषेर्वचनमाज्ञाय शर्यातिरविचारयन् ।
ददौ दुहितरं तस्मै च्यवनाय महात्मने ॥
प्राप्तप्रसादो राजा वै ससैन्यः पुरमाव्रजत् ॥
सुकन्यापि पतिं लब्ध्वा तपस्विनमनिन्दिता ।
नित्यं पर्यचरत्प्रीत्या तपसा नियमेन च ।
समाराधयत क्षिप्रं च्यवनं सा शुभानना ॥
कस्यचित्त्वथ कालस्य त्रिदशौ तामपश्यताम् ।
ऊचतुः समभिद्रुत्य नासत्यावश्विनाविदम् ॥
इच्छाव भद्रे ज्ञातुं त्वां तत्त्वमाख्याहि शोभने ॥

सुकन्या उवाच--

शर्यातितनयां वित्तं भार्यां मां च्यवनस्य च ।

अश्विनौ ऊचतुः—

न देवेष्वपि तुल्यां हि त्वया पश्याव भामिनि ! ।
कस्मादेवंविधा भूत्वा जराजर्जरितं पतिम् ॥
त्वमुपास्से ह कल्याणि ! कामभोगबहिष्कृतम् ।
सा त्वं च्यवनमुत्सृज्य वरयस्वैकमावयोः ॥

सुकन्या उवाच—

रताऽहं च्यवने पत्यौ मैवं मां पर्यशङ्कतम् ।

अश्विनौ ऊचतुः—

युवानं रूपसंपन्नं करिष्यावः पतिं तव ।
ततस्तस्यावयोश्चैव वृणीष्वान्यतमं पतिम् ॥
एतेन समयेनैनमामन्त्रय पतिं शुभे ! ।
सा भर्त्रा समनुज्ञाता क्रियतामित्यथाब्रवीत् ।
ऊचतू राजपुत्रीं तां पतिस्तव विशत्वपः ।
ततोऽम्भश्च्यवनः शीघ्रं रूपार्थी प्रविवेश ह ।
अश्विनावपि तद् राजन् सरः प्राविशतां तदा ॥
ततो मुहूर्तादुत्तीर्णाः सर्वे ते सरसस्त्रयः ।
तुल्यवेषधराश्चैव मनसः प्रीतिवर्धनाः ।
तेऽब्रुवन्सहितास्सर्वे वृणीष्वान्यतमं शुभे ॥

सा समीक्ष्य तु तान्सर्वांस्तुल्यरूपसमन्वितान् ।
निश्चित्य मनसा बुद्धचा देवी वव्रे स्वकं पतिम् ।।
लब्ध्वा तु च्यवनो भार्यां वयो रूपं च वाञ्छितम् ।
हृष्टोऽब्रवीन्महातेजास्तौ नासत्याविदं वचः ।।
यथाऽहं रूपसंपन्नो वयसा च समन्वितः ।
कृतो युवां करिष्यामि प्रीत्याऽहं सोमपीथिनौ ।।
तत् श्रुत्वा हृष्टमनसौ दिवं तौ प्रति जग्मतुः ।
च्यवनश्च सुकन्या च सुराविव विजह्रतुः ।।
ततः श्रुत्वा तु शर्यातिर्वयस्थं च्यवनं कृतम् ।
सुहृष्टः सेनया सार्धमुपायाद् भार्गवाश्रमम् ।।
अथैनं भार्गवो (राजन्) उवाच परिसान्त्वयन् ।
याचयिष्यामि राजंस्त्वां संभारानुपकल्पय ।।
कारयामास शर्यातिः यज्ञायतनमुत्तमम् ।
तत्रैनं च्यवनो (राजन्) याजयामास भार्गवः ।।
अगृह्णाच्च्यवनः सोममश्विनोर्देवयोस्तदा ।
तमिन्द्रो वारयामास गृह्णानं स तयोर्ग्रहम् ।।

च्यवन उवाच--

मावमंस्था महात्मानौ रूपद्रविणवत्तरौ ।
अश्विनावपि देवेन्द्र देवौ विद्धि पुरन्दर ।।

इन्द्र उवाच--

चिकित्सकौ कर्मकरौ कामरूपसमन्वितौ ।
लोके चरन्तौ मर्त्यानां कथं सोममिहार्हतः ॥
आभ्यामर्थाय सोमं त्वं ग्रहीष्यसि यदि स्वयम् ।
वज्रं ते प्रहरिष्यामि घोररूपमनुत्तमम् ॥
एवमुक्तः स्मयन्निन्द्रमभिवीक्ष्य स भार्गवः ।
जग्राह विधिवत्सोममश्विभ्यामुत्तमं ग्रहम् ॥
ततोऽस्मै प्राहरद्वज्रं घोररूपं शचीपतिः ।
तं स्तम्भयित्वा च्यवनो जुहुवे मन्त्रतोऽनलम् ॥
ततोऽब्रवीद्देवराजश्च्यवनं भयपीडितः ।
सोमार्हावश्विनावेतावद्य विप्र प्रसीद मे ॥
एवमुक्तस्य शक्रेण च्यवनस्य महात्मनः ।
स मन्युर्व्यगमच्छीघ्रं मुमोच च पुरंदरम् ॥
अश्विभ्यां सहितान्देवान्याजयित्वा च तं नृपम् ।
सुकन्यया सहारण्ये विजहारानुकूलया ॥

शब्दार्थ

पयोष्ण्याम् =विन्ध्य पहाड़ की नदी के किनारे । महाद्युतिः=बड़ा चमकीला । स्थाणुभूतः=चेष्टा से रहित । विहर्तुम =घूमने के लिये । चङ्क्रम्यमाणा =टहलती हुई। समासदत् =पास आई । निर्बिभेद= फोड़ दी । परममन्युमान् =बड़े क्रोध वाला। समावृणोत=बन्द कर

दिये । प्रेक्ष्य=देखकर । **अटन्त्या**=घूमती हुई ने । **खद्योतवत्**=टिटाणे (जुगनू) की तरह । **चन्द्रादित्यसमप्रभम्**=चांद और सूर्य के समान चमकने वाले को । **क्षन्तुम्**=क्षमा करने को । **विद्धः**=बिंधा हुआ । **प्रतिगृह्य**=लेकर । **समभिद्रुत्य**=शीघ्र पास जाकर । **जराजर्जरितम्**=बुढ़ापे से ढीले अंगवाले को । **उत्सृज्य**=छोड़कर । **हृष्टः**=खुश । **अभिवीक्ष्य**=देखकर । **मन्युः**=क्रोध । **विजहार**=घूमने लगा । **वित्तम्** जानो ।

## अभ्यास

(क) तपस्या में संलग्न च्यवन की क्या दशा हो गई थी ?

(ख) सुकन्या ने ऋषि का क्या अपराध किया, और क्यों किया ?

(ग) अश्विनीकुमार वहां क्यों आये ?

(घ) इन्द्र के वज्र को विफल कैसे किया ?

इस कथा को संक्षेप में लिखो।

१—संधि-विच्छेद कीजिये:—

सरोरम्यम् । विहर्तुमिदम् । तस्यैव । खल्विदम् । इत्युक्त्वा । शकृन्मूत्रे । पर्यपृच्छत् । सुकन्येदम् । प्रतिगृह्याहम् । नासत्यावश्विनाविदम् । तच्छ्रुत्वा अगृह्णाच्च्यवनः ।

२—सविग्रह समास लिखिये :—

भार्गवचक्षुषी । बुद्धिमोहबलात् । चन्द्रादित्यसमप्रभम् । जराजर्जरितम् ।

३—प्रकृति-प्रत्यय का विश्लेषण करो:—

समावृतः । विहर्तुम् । दृष्ट्वा । प्रेक्ष्य ।

४—समासदत् । निर्बिभेद । ऊचुः । वरस्व । अगृह्णात् । अब्रवीत्—

इन क्रियाओं के धातु, लकार, पुरुष और वचन लिखो ।

# जनकयज्ञे आत्मज्ञान-विमर्शः

विदेहानां वंशे जनकनामा गुणिगणाग्रणीः आत्मज्ञानी च अतिप्रसिद्ध एको राजा बभूव । स च एकदा बहुदक्षिणेन अश्वमेधादिना यज्ञेन अयजत् । तस्मिन् यज्ञे च विदुषां बाहुल्येन प्रसिद्धानां पाञ्चालानाञ्च देशानां द्विजातयः अभिसंगता बभूवुः । तानभिसंगतानवलोक्य राज्ञो जनकस्य चेतसि--"को नु खलु एषां मध्ये अतिशयेन अनुवचनसमर्थः ?"--इति विशेषेण जिज्ञासा अजायत । तदनु स तद्ज्ञानोपायभूतं गवां सहस्रं गोष्ठे अवरुरोध । तासामेकैकस्याः गोः शृङ्गयोः सुवर्णस्य दश दश पादान् आबन्धुं भृत्यानादिदेश । भृत्यैश्च तदादेशसमकालमेव सर्वं सौष्ठवेन सम्पादितम् ।

एवं सज्जीकृत्य जनको ब्राह्मणान् उवाच--"भो ब्राह्मणाः ! भगवन्तः !! यो युष्माकं मध्ये आत्मानमतिशयेन ब्रह्मज्ञं मन्यते स एव यासां प्रतिशृङ्गं पञ्च-पञ्च सुवर्णपादाः आबद्धाः सन्ति एतादृशीः अस्मद्गोष्ठेऽवरुद्धाः गाः, स्वगृहं प्रति नेतुमर्हति'-इति । उक्त-

प्रकारेण तेन राज्ञा संबोधिताः ब्राह्मणाः आत्मनः ब्रह्मिष्ठतां प्रतिज्ञातुं कथमपि नोदसहन्त तथा सुवर्णभारसज्जितानां गवां सहस्रमपि तान् तथा कर्तुमुत्साहयितुमलं नाभवत् । अथ तेषु तथा म्लानवदनेषु सत्सु याज्ञवल्क्यः आत्मीयमन्तेवासिनम् उवाच--"हे सोम्य! सामश्रवः!! नयैताः गाः अस्मद्-गृहान् प्रति"--इति एवं स्वगुरोर्वचनमाकर्ण्य स ब्रह्मचारी ताः गाः आचार्यगृहं प्रति आनयामास । अथेतरे ब्राह्मणाः ब्रह्मिष्ठाय निर्दिष्टानां गवामपहरणात् "याज्ञवल्क्येन स्वात्मना ब्रह्मिष्ठता अस्माकञ्चाल्पज्ञता प्रख्यापिता," इति मन्वानाः अतितरां चक्रुधः-ऊचुश्च यत्-"कथमयमस्माकमेकैकप्रधानानामग्रे इत्थं भावितुं उत्सहते"--इति ।

तेषु अश्वलो नामैकः होता ब्रह्मिष्ठाभिमानी सन् एनं याज्ञवल्क्यं पप्रच्छ-"कथं रे याज्ञवल्क्य! त्वमस्माकमग्रे आत्मानं ब्रह्मिष्ठमभिमन्तुमुत्सहसे ।" "अनौद्धत्यं भवति ब्रह्मविदः प्रधान-लिङ्गमिति" मनसि निधाय याज्ञवल्क्यः प्रत्युवाच-"नमस्यामो वयं ब्रह्मिष्ठम्" इति । कथं तर्हि ब्रह्मिष्ठपणभूता गाः स्व-गृहं प्रति प्रस्थापित-

वानसि ?" इति जिज्ञासितो याज्ञवल्क्यः सविनयमुदतरत् वयं गोकामा एव स्मः, अतो गोग्रहणं कृतवन्तः। तदनन्तरं ते सर्वेऽपि याज्ञवल्क्यं बहुप्रश्नान् प्रष्टुमारभन्त। याज्ञवल्क्यश्च विशदं सविनयञ्च सर्वानपि पृच्छकान् उत्तरेण पर्य्याप्तं तोषयामास।

## शब्दार्थ

गुणिगणाग्रणीः=गुणी जनों के समाज में अगुआ। अनुवचनसमर्थः=व्याख्या करने में लायक। गोष्ठे=गोशाला में। ब्रह्मज्ञम्=ब्रह्म को जानने वाले को। सुवर्णपादाः=चौथाई सोने के सिक्के। म्लानवदनेषु=मुरझाये मुख वाले। सौष्ठवेन=अच्छी तरह से। अनौद्धत्यम्=नम्रता (विनय)। पृच्छकान=पूछनेवालों को। पर्याप्तम्=काफी। अभिमन्तुं=मानने को।

## अभ्यास

(क) यज्ञ में आये विद्वान् ब्राह्मणों को देखकर जनक को क्या जिज्ञासा हुई ?

(ख) सामश्रवा के गौएँ लेजाने पर ब्राह्मण क्यों क्रुद्ध हुए ?

(ग) याज्ञवल्क्य ने अश्वल नाम वाले ब्राह्मण को किस प्रकार से सन्तुष्ट किया ?

१—निम्नलिखित समस्त पदों का विग्रह करके समासों के नाम बताओ।

अनुवचनसमर्थः। ज्ञानोपायभूतम्। सुवर्णभारसुसज्जितानाम्।

२—संधि विच्छेद कीजिए :—

तानभिसंगतानवलोक्य। तासामेकैकस्याः। भृत्यानादिदेश। गोष्ठेऽवरुद्धाः।

३—संधि और समास में क्या अन्तर है ?

४—'विद्वस्' का षष्ठी के, और 'गो' का द्वितीया के बहुवचन में, 'युष्मद्' का षष्ठी के बहुवचन में 'तत्' का द्वितीया के बहुवचन में और 'गृह' शब्द का द्वितीया के बहुवचन में रूप लिखो।

५—प्रति का किस विभक्ति के साथ सम्बन्ध होता है ?

६—सज्जीकृत्य। नेतुम्। भाषितुम्। मन्वानाः। प्रष्टुम्। कृतवन्त :— इनका परिचय दो। तथा 'अयजत्'। 'अजायत'। 'अवरुरोध'। 'मन्यते'। 'चुक्रुधुः'—इन क्रियाओं के धातु, लकार, पुरुष और वचन लिखो।

---

# महाचतुरकशृगाल-कथा

अस्ति कस्मिश्चिद् वनोद्देशे महाचतुरको नाम शृगालः। तेन कदाचिद् अरण्ये स्वयंमृतो गजः समासादितः। परं तस्य समन्तात् परिभ्रमति। कठिनां त्वचं भेत्तुं न शक्नोति।

अथात्रावसरे इतस्ततश्च परिभ्रमन कश्चित् सिंहः तत्रैव प्रदेशे समाययौ। अथ तम् आगतम् दृष्ट्वा स क्षितितलमिलन्मौलिमण्डलः संयोजितकरकमलः सविनयम् उवाच--"स्वामिन् ! त्वदीयोऽहं लागुडिकः। त्वदर्थे गजम् इमं रक्षामि। तद् एनं भक्षयतु स्वामी"।

अथ सिंहः प्राह--"भोः ! नाऽहम् अन्यहतं कदाचिद् अपि भक्षयामि। तत् तव एव गजोऽयम् मया प्रसादीकृतः"। तत् श्रुत्वा शृगालः सानन्दम् आह--"युक्तम् इदं स्वामिनो निजभृत्येषु"।

अथ सिंहे गते कश्चिद् व्याघ्रः समाययौ। तमपि दृष्ट्वा स व्यचिन्तयत्--"एकस्तावत् दुरात्मा प्रणिपाते-

नापवाहितः । तत् कथम् इदानीम् इमम् अपवाहयिष्यामि । नूनं शूरोऽयम् । न खलु भेदं विना साध्यो भवति । उक्तम् च--

न यत्र शक्यते कर्तुम् साम दानमथापि वा ।
भेदस्तत्र प्रकर्त्तव्यो यतोऽसौ वशकारकः ॥

किम् च । सर्वोपि भेदेन बध्यते । उक्तम् च--

अन्तःस्थेनाविरुद्धेन सुवृत्तेनातिचारुणा ।
अन्तर्भेदेन संप्राप्तम् मौक्तिकेनाऽपि बन्धनम् ॥"

एवं संप्रधार्य तदभिमुखो गत्वा-ईषदुन्नतकन्धरः ससंभ्रमम् उवाच--'माम ! कथम् अत्र भवान् मृत्युमुखे प्रविष्टः ? येन एष सिंहेन गजो व्यापादितः, स च माम् एतद्रक्षणे नियुज्य स्वयं स्नानार्थं गतः । तेन गच्छता समादिष्टम्-"यदि कश्चिद् इह व्याघ्रः समेति, तत् त्वया सुगुप्तम् ममावेदनीयम् । येन वनम् इदं मया निर्व्याघ्रं कर्त्तव्यम् । यतः पूर्वं व्याघ्रेण एकेन मद्व्यापादितो गजः शून्ये उच्छिष्टतां नीतः । तद्दिनाद् आरभ्य व्याघ्रान् प्रति प्रकुपितोऽस्मि" ।

अथ तत् श्रुत्वा व्याघ्रः संत्रस्तः तम् आह—"भो भागिनेय! देहि मे प्राणदक्षिणाम्। यतः त्वया तस्य-अत्र चिरमायातस्य अपि मदीया कापि वार्ता नाख्येया"—इति। एवम् अभिधाय सत्वरं पलायाञ्चक्रे।

अथ गते व्याघ्रे तत्र कश्चिद् द्वीपी प्राप। तमपि दृष्ट्वा असौ व्यचिन्तयत्—"दृढदंष्ट्रोऽयं चित्रकः। तद् अस्माद् एवास्य गजस्य चर्मभेदं कारयामि"—इति निश्चित्य तम् उवाच—"भो भगिनीसुत! किमिति चिराद् दृष्टोऽसि? कथं च बुभुक्षित इव लक्ष्यसे? तत् अतिथिरसि मे। तद् एष गजः सिंहेन हतः तिष्ठति। अहं चास्य तदादिष्टो रक्षपालः। परं तथापि यावदसौ न समायाति, तावदस्य गजस्य मांसं भक्षयित्वा तृप्तिं कृत्वा द्रुतं व्रज"। स आह—"माम! यदि एवम् तत् न कार्यं मे अस्य मांसेन। यतः।

"जीवन्नरो भद्रशतानि पश्यति"। तत् सर्वथा तद् एवं भुज्यते, यद् एव परिणमति। तद् अहम् इतोऽपयास्यामि।" शृगाल आह—भो—अधीर! विश्रब्धो भूत्वा भक्षय। तस्य आगमनम् दूरतोऽपि तव अहम् आवेदयिष्यामि। अथ द्वीपिना तथानुष्ठिते भिन्नां त्वचम् विज्ञाय अभिहितम् जम्बुकेन—भो भगिनीसुत!

गम्यताम्, गम्यताम्। एष सिंहः समायाति। तत् श्रुत्वा चित्रकोऽपि दूरं प्रनष्टः।

अथ यावत् असौ तद्भेदकृतद्वारेण मांसं भक्षयति, तावत् अतिसंक्रुद्धोऽपरः शृगालः समाययौ। अथ तम् आत्मतुल्यं ज्ञातपराक्रमं च दृष्ट्वा 'उत्तमं प्रणिपातेन'-इत्यादिश्लोकं पठन् स तदभिमुखकृतप्रयाणः स्वदंष्ट्राभिः तं विदार्य दिगन्तभाजं कृत्वा स्वयं सुखेन चिरकालं हस्तिमांसं बुभुजे।

## शब्दार्थ

लागुडिकः=सन्तरी (पहरेदार)। साध्यः=काम बनने वाला। व्यापादितः=मार दिया। उच्छिष्टताम्=जूठ। रक्षपालः=रखवाला। दिगन्तभाजम्=दूर दिशा में भागता हुआ। भेत्तुम्=तोड़ने को। प्रसादीकृतः=पेश किया, उपहार किया। अपवाहितः=टाल दिया। संप्रधार्य=निश्चयकर। नियुज्य=लगाकर। पलायांचक्रे=भाग गया। विश्रब्धः=बेखौफ। विदार्य=फोड़कर।

## अभ्यास

(क) गीदड़ ने मरे हाथी को फाड़ने में अपने को असमर्थ जानकर किस उपाय का आश्रय लिया?

(ख) साम दाम आदि नीतियों का उसी तरह से क्यों आश्रय लिया?

१—संधि करो:—

तत्+श्रुत्वा । गत्वा+ईषत् । शून्ये+उच्छिष्टताम् । आयातस्य+अपि । यदि+एवम् ।

२—'दुरात्मा'—संधि विच्छेद करके बताओ किस शब्द से बना है ।

३—विग्रह सहित समास बताओ—

क्षितितलमिलन्मौलिमण्डलः । संयोजितकरकमलः । सानन्दम् । तदादिष्टः । आत्मतुल्यं ज्ञातपराक्रमम् ।

४—समाययौ । उवाच । व्यचिन्तयत् । तिष्ठति । बुभुजे—इन क्रियाओं के धातु, लकार, पुरुष और वचन बताओ ।

प्रकृति प्रत्यय का पृथक्करण कीजिए—आवेदनीयम् । कर्तव्यम् । विज्ञायो तस्य । अयम् । मया—यह रूप किस शब्द से किस विभक्ति में कौन से वचन में हैं ।

———

# शस्त्रविद्यकथा

बभूव धारा नाम राजधानी। तत्र विवेकशर्म्मणः पुत्रो निर्विवेको नाम ब्राह्मणः प्रतिवसति स्म। स च वेदाध्ययनपराङ्मुखः स्वाचारनिरपेक्षः व्याध-प्रसङ्गेन मृगयारसिको बभूव। एकदा मातुरनुनयेन मृगवधार्थ-मरण्यं न जगाम। गृहांगणे निषण्णः पुरश्च देवालयकोटरे कूजतः पारावतान् दृष्ट्वा चिन्तयामास--

"यदिदं देवालयमारुह्य पारावतशावकान् पोथयामि"।

ततः स ब्राह्मणः पारावतशावकार्थी देवालयमारुह्य कोटरे निक्षिप्तहस्तः कोटरस्थं सर्पं फणायां धृत्वा कपोत-शावकभ्रमेण आचकर्ष। कोटरादाकृष्टेन च तेन सरीसृपेण वेष्टितबाहुः परमत्रस्तः चिन्तयामास—यदहं सर्पमत्यजन् एकहस्तावलंबेन देवालयात् अवरोढुं न शक्नोमि। त्यजंश्च सर्पदष्टव्योऽस्मि। तत् किमिदानीं करवाणि? तदन-न्तरम् संकटे पतितः उच्चैरार्तस्वरं चकार--

"त्रायन्तां मां लोकाः"--इति।

तत् क्रन्दितमाकर्ण्य लोकाः वर्तुलीबभूवुः। पश्चात्तां कथां श्रुत्वा राजा भोजदेवोऽपि ब्राह्मणरक्षार्थी तत्र आजगाम। तदनन्तरं सर्वैः विचिन्त्यमानोऽपि ब्राह्मण-रक्षाक्षमः शीघ्रतया कश्चित् उपायो न निर्धारितः। तस्य उच्चतरस्य अभ्रंलिहशिरसः देवालयशिखरस्य एकहस्तमात्रावलम्बेन स्थितं संदिग्धं ब्राह्मणं दृष्ट्वा करुणार्द्रहृदयः भोज-देवो राजा सर्वान् आदिदेश—"रे रे लोकाः! कश्चिदस्ति युष्माकं मध्ये य एनं ब्राह्मणं त्रायते सुवर्णलक्षं च गृह्णाति? यस्य युक्त्या पराक्रमेण वा ब्राह्मणोऽयं कुशली देवालयात् अवतरति, तस्मै निश्चितमहं लक्षं सुवर्णानि दास्ये"।

तदा कीर्तिसिंहनाम्ना केनापि राजपुत्रेण धनुर्विद्या-विचक्षणेन उक्तम्—'देव! ब्राह्मणमवतारयामि। ततो ब्राह्मणः तावत् इदानीं सर्पवेष्टितं बाहुं स्तब्धं कृत्वा दर्शयतु।' तथा कृतवति ब्राह्मणे स राजपुत्रः कोदण्डमाकृष्य सन्धानं विधाय नाराचचक्रेण सर्पस्य शरीरं तथा चिच्छेद, यथा छिन्नं सर्पस्य कलेवरं भूमौ पपात। ब्राह्मणस्य च हस्ते कुशपत्रसमानापि लेखा नाभूत्। पश्चात् करस्थितां सर्पफणां परित्यज्य लब्धस्वान्त-

स्वास्थ्यः ब्राह्मणः देवालयात् पूर्ववदेव अवततार। राजा च तं राजपुत्रं स्वीकृतसुवर्णलक्षं कृत्वा परश्च वासःप्रभृतिभिः बहुभिः वस्तुभिः परितोषयामास।

## शब्दार्थ

वेदाध्यनपराङ्मुखः=वेद के पढ़ने से विमुख। स्वाचारनिरपेक्षः=अपने आचार का लापरवाह। मृगयारसिकः=शिकार का शौकीन। कोटरे=खोड़र में। शावकान्=बच्चों को। पोथयामि=मसल दूं। फणायाम्=फण में। सरीसृपेण=सांप ने (से)। अवरोढुम्=उतरने को। अभ्रंलिहशिरसः=जिनकी चोटियां आकाश को चुम्बन कर रही हैं। स्तब्धं कृत्वा=चेष्टा शून्यकर। सन्धानं विधाय=लक्ष्य (मेल) बना कर।।

## अभ्यास

(क) विवेकशर्मा का पुत्र सांप के फन्दे में कैसे फँसा ?

(ख) उसकी रक्षा किसने किस प्रकार से की ?

(ग) राजा ने उसे पारितोषिक क्यों दिया ?

१—सविग्रह समास लिखिये :—

वेदाध्ययनपराङ्मुखः। निक्षिप्त-हस्तः।

२—सन्धिविच्छेद करो :—

उच्चैरार्तस्वरं चकार। देवोऽपि। देवो राजा। परैश्च

३—'विचिन्त्यमानः'। 'दृष्टवा'। 'उक्तम्'। 'परित्यज्य'। श्रुत्वा'—इनके प्रकृति प्रत्यय बताकर इन धातुओं के क्तवत्—अन्त रूप लिखो।

४—पोथयामि। आचकर्ष। करवाणि। चकार। चिच्छेद। अवततार—इन क्रियाओं के धातु, लकार, पुरुष, वचन बताओ।

---

# शिबिचरितम्

जिज्ञासमानौ वरदौ महात्मानमुशीनरम् ।
इन्द्रः श्येनः कपोतोऽग्निर्भूत्वा यज्ञेऽभिजग्मतुः ॥
ऊरुं राज्ञः समासाद्य कपोतः श्येनजाद् भयात् ।
शरणार्थी तदा राजन् निलिल्ये भयपीडितः ॥

श्येनः --

धर्मात्मानं त्वाहुरेकं सर्वे राजन्महीक्षितः ।
विहितं भक्षणं राजन् पीडचमानस्य मे क्षुधा ।
मा हिंसीर्धर्मलोभेन धर्ममुत्सृज्य मा नशः ॥

राजा--

संत्रस्तरूपस्त्राणार्थी त्वत्तो भीतो महाद्विज ।
मत्सकाशमनुप्राप्तः प्राणगृध्नुरयं द्विजः ॥
एवमभ्यागतस्येह कपोतस्याभयार्थिनः ।
अप्रदाने परो धर्मः किं त्वं श्येनेह पश्यसि ॥
प्रस्यन्दमानः संभ्रांतः कपोतः श्येन ! लक्ष्यते ।
मत्सकाशं जीवितार्थी तस्य त्यागो विगर्हितः ॥

श्येनः --

आहारात्सर्वभूतानि संभवन्ति महीपते !
आहारेण विवर्धन्ते तेन जीवन्ति जन्तवः ॥
न तु भोजनमुत्सृज्य शक्यं वर्तयितुं चिरम् ।
प्रमृते मयि धर्मात्मन् ! पुत्रदारादि नङ्क्ष्यति ॥
रक्षमाणः कपोतं त्वं बहून्प्राणान्न रक्षसि ।
बहून्यो बाधते धर्मान्न स धर्मः कुवर्त्म तत् ॥
अविरोधीतु यो धर्मः स धर्मः सत्यविक्रम ।
विरोधिषु महीपाल निश्चित्य गुरुलाघवम् ।
न बाधा विद्यते यत्र तं धर्मं समुपाचरेत् ॥

राजा --

बहुकल्याणसंयुक्तं भाषसे विहगोत्तम !
न तेऽस्त्यविदितं किंचिदिति त्वां लक्षयाम्यहम् ॥
शरणैषिपरित्यागं कथं साध्विति मन्यसे ।
आहारार्थं समारम्भस्तव चायं विहंगम !
शक्यश्चाप्यन्यथा कर्तुमाहारोऽप्यधिकस्त्वया ॥

श्येनः --

यस्तु मे दैवविहितो भक्षः क्षत्रियपुङ्गव !

तमुत्सृज महीपाल ! कपोतमिममेव मे ।
श्येनाः कपोतान् खादन्ति श्रुतिरेषा सनातनी ॥

राजा –

यं वा कामयसे कामं श्येन ! सर्वं ददानि ते ।
विनैनं पक्षिणं श्येन ! शरणार्थिनमागतम् ॥

श्येनः —

उशीनर ! कपोते ते यदि स्नेहो नराधिप !
आत्मनो मांसमुत्कृत्य कपोततुलया धृतम् ॥
यदा समं कपोतेन तव मांसं नृपोत्तम !
त्वया प्रदेयं तन्मह्यं सा मे तुष्टिर्भविष्यति ॥

राजा —

अनुग्रहमिमं मन्ये श्येन ! यन्माऽभियाचसे ।
तस्मात्तेऽद्य प्रदास्यामि स्वमांसं तुलया धृतम् ॥
अथोत्कृत्य स्वमांसं तु राजा परमधर्मवित् ।
तुलयामास कौन्तेय ! कपोतेन समं विभो !
न विद्यते यदा मांसं कपोतेन समं धृतम् ।
तत उत्कृत्तमांसोऽसावारुरोह स्वयं तुलाम् ॥

श्येनः —

इन्द्रोऽहमस्मि धर्मज्ञ कपोतो हव्यवाडयम् ।
जिज्ञासमानौ धर्मं त्वां यज्ञवाटमुपागतौ ॥
यावल्लोके मनुष्यास्त्वां कथयिष्यन्ति पार्थिव !
तावत्कीर्तिश्च लोकाश्च स्थास्यन्ति तव शाश्वताः ॥
इत्युक्त्वा जग्मतू राजन् इन्द्राग्नी तुष्टमानसौ ।
उशीनरोऽपि वपुषाऽप्यारुरोह त्रिविष्टपम् ॥

## शब्दार्थ

श्येनः=बाज । समासाद्य=पाकर । चिकीर्षसि=करना चाहता है । प्राणगृध्नुः=प्राणों का लोभी । प्रस्यन्दमानः=जोर से उड़ता हुआ । वर्तयितुम्=रहना । समारम्भः=उद्योग । पुङ्गव=श्रेष्ठ । उत्कृत्य=काटकर । त्रिविष्टपम्=स्वर्गलोक । जिज्ञासमानौ=जानने की इच्छा वाले । शरणैषी=रक्षा चाहने वाला । अभयार्थिनः=भय से रहित होने की इच्छा वाले का । विगर्हितः=निन्दा किया गया है । कुवर्त्म=बुरा रास्ता । अन्यथाकर्तुम्=उल्टा करने को । सनातनी=हमेशा रहने वाली । हव्यवाट्=अग्नि ।

## अभ्यास

(क) इस चरित का संक्षिप्त सारांश दो ।
(ख) कबूतर तथा श्येन के रूप में कौन थे ?
(ग) राजा ने कबूतर की रक्षा के लिये क्या किया था ?
(घ) इस चरित से क्या शिक्षा मिलती है ?

१—'निलिल्ये'। 'आहुः'। 'चिकीर्षसि'। 'पश्यसि'। 'नङ्क्ष्यति'। 'विद्यते'। 'उत्सृज'। 'कामयसे'। 'ददानि'। 'आरुरोह'—इनके धातु, लकार, पुरुष और वचन बताओ।

२—राज्ञः—यह रूप किस विभक्ति में, किस शब्द से बना है और कौन से वचन में है?

३—'प्राणगृध्नुः'। 'गुरुलाघवम्'—सविग्रह समास लिखिये।

---

# पुरुषपरीक्षायां वञ्चक-कथा

आसीद् गोदावरीतीरे विशाला नाम नगरी। तस्यां च समुद्राभिधानो राजा बभूव। तस्य पुत्रं चन्द्रसेन-नामानं शुद्धहृदयं दृष्ट्वा तन्नगरनिवासिना वञ्चकेन केनचिद् वणिजा चिन्तितम्।--

'शार्दूलस्य मृगा भक्ष्याः नागा इव गरुत्मतः।
असाधोः साधवो भक्ष्याः श्येनस्येवेतरे खगाः॥

तदयं कुमारः साधुप्रकृतिमर्म निश्चितं सुखग्राह्यधनो भविष्यति, तदेनम् उपसर्पामि'--इति परामृश्य स तं राजकुमारं सिषेवे। गुञ्जाफलप्राया दुर्जनस्य प्रकृतिः परिणामविरसापि आपातसुरसा भवति।

ततो वञ्चकः पुनश्चिन्तयामास--'यदेनं केनाप्यु-पायेन देशान्तरं नीत्वा द्वारभूतेनैतेनैव राजकोष-सारभूतानि रत्नानि हरामि।' ततश्च विश्रम्भ-प्रस्तावे कुतूहलप्रस्ताव च देशान्तरकथां श्रवणरमणीयां मुहुर्मुहुः कथयति। तत्कथाश्रवणरसिकं विदित्वा वणिगुवाच--

कुमार ! राज्ये वर्तमानस्य भवतो नित्यसुलभै-रप्यपभुक्तैरेव भोग्यवस्तुभिः कुतः सुखम् ? सखन्तु देशान्तरे संभवति यत् प्रत्यहमदृष्टदर्शनम् अभुक्तभोजनम् अननुभूतानुभवश्च जायते ।

चन्द्रसेन उवाच--सखे ! महती ममोत्कण्ठा वर्तते कथं देशान्तराणि दृश्यन्ताम् ?-इति । वणिगुवाच-भारलघुना गुरुमूल्येन धनेन निर्वहति देशान्तर-गमनं, यदि मनः स्थिरं भवति, धनं तु राजकुमारस्य विद्यते एव । तन्मनः स्थिरीक्रियतां कुमारेण । कुमार उवाच--मनःस्थैर्यं कृतम् । वञ्चको ब्रूते-यदि कथेय-मन्यकर्णपथगामिनी परितर्कविषया च न भवति तदा निर्वहति कार्यम् । कुमार उवाच--न तर्कणीयं केनापि ।

ततस्तथा देशान्तराभिलाषं कुमारं तथाविधधन-समेतम् आखेटव्याजेन नीत्वा चलति स वणिक् । कियतो दूरात् सैन्यं परावर्त्य वराश्वावारूढौ द्वावेतौ काञ्चिद्दिशमुद्दिश्य जग्मतुः । ततो दूरगमनपरि-श्रान्तौ क्षुत्पिपासापराभूतौ क्वचिदरण्ये जलाशयसन्नि-धाने महावृक्षमेकं ददृशतुः । तस्य छायायां द्वावपि

तुरंगात् अवतेरतुः । कुमारस्तु कृतजलपानः परमसुखी छायामासाद्य तृणशय्यायां निद्राणो बभूव । तं निद्राणं दृष्ट्वा वञ्चकेन चिन्तितं–'यन्मम कृत्यस्यायमेवावसरः ।' ततः पादसंवाहनं कुर्वाणेन तेन दुरात्मना कुमारस्य निद्रा निरूपिता । तं गाढनिद्रं विदित्वा लताभिर्बबन्ध । तदनन्तरं लताबद्धसर्वगात्रस्य तस्य हृदयमारुह्य शस्त्रीमादाय मनसा विचारयामास–'जीववधो न भवेत्, हतप्रायो जीवन्मृतकः कथं स्यात्'–इति । तदेनमन्धं विधाय निजप्रयोजनं साधयामीति निश्चित्य चक्षुषी स्फोटयामास । अथ यावत् कुमारः–'सखे ! त्रायस्व'–इति वदति तावदसौ कृतकर्मा धनं तुरगौ चादाय पलायितः । कुमारस्तु तत्रारण्ये कृतार्तनादः रुरोद । रुदतः चक्षुर्वेदनया निर्दयनिक्षिप्तहस्तस्य तस्य पादः त्रुटितबन्धो बभूव । अथ स यावद् उत्तिष्ठति तावच्चक्षुःपीडया व्याकुलो निस्सहो निरवलम्बो भूमौ पतति । तत्र वृक्षे दयालुर्नाम कश्चिद् वृद्धशुको वसति स्म । तस्य द्वौ पुत्रौ महाशुकौ संचरणासमर्थस्य पितुः प्रत्यहम् आहारम् आनीयानीय भक्त्या प्रयच्छतः । तस्मिन् दिने तौ तं वृद्धशुकं पितरं भोजयित्वा कथयामासतुः–"पितरौ ! आवाभ्यां नर्मदातीरे अपूर्वकष्टस्थानं दृष्टम्" । पुनस्तौ कथयतः—यूथिका-

नाम्नि नगरे नीलरथभूपालस्यैक एव चित्ररथनामधेयः कुमारोऽस्ति। सच केनचित् कारणेन नष्टचक्षुर्ज्योतिः अनेकैर्भिषजांवरैश्चिकित्स्यमानोऽपि नाद्यापि चक्षुर्ज्योतिः लभते। तेन रात्रौ निर्दीपं गृहमिव तद् राज्यं महाकष्टस्थानं दृष्टमावाभ्याम्।

वृद्धशुक उवाच--पुत्रौ ! नष्टचक्षुषश्चक्षुर्बलाय वर्तते भेषजं, यच्च ते वैद्या न जानन्ति।

तावूचतुः-किं तद् भेषजम् ? वृद्धशुकः कथयति-एतस्यैव तरोः कुसुमेन शुष्केणार्द्रेण वा यद्यञ्जनं क्रियते, तदा नष्टचक्षुश्चक्षुष्मान् भवति। तदाकर्ण्य कुमारश्चिन्तयामास-"अहो विधिरनुकूलो दृश्यते, यद् विहगालपनेऽपि चक्षुर्भेषजप्रस्तावना जाता। भेषजमपि सलभमिदानीम्। तदस्य वृक्षस्य पुष्पेण चक्षुरञ्जनमाचरामि तावत्" कुमारेण तथा कृतम्। ततः प्रथमाञ्जनेन चक्षुर्वेदना शान्ता। द्वितीयाञ्जनेन प्रकृष्टा दृष्टिर्बभूव। ततः परमहृष्टः कुमारश्चिन्तयामास--यदिदानीम् असन्मैत्रीकृता विपन्निस्तीर्णा, अग्रे किं विधेयम् ? अनया दुर्दशया यदि पुनर्गृहं गम्येत, तदान्ये मामुप-

हसिष्यन्ति, उपहासश्च मरणादपि निन्दितः। अतो गृहं न यास्यामि। वरमुपलब्धानुभावमिदमौषधं नीत्वा यूथिकापुरमेव गच्छामि। तत्र च राजकुमारं चित्ररथमनेनौषधेन सलोचनं करोमि। तेन जातप्रसादस्तस्य पिता नीलरथो मम कामनां पूरयिष्यति'—इत्थं परामृश्य भेषजमादाय स कुमारः पन्थानं पृच्छन् कियतापि कालेन यूथिकापुरं जगाम। तत्र नीलरथं साक्षात्कृत्य तत्पुत्रं चक्षुष्मन्तं चकार।

अथ परं परितुष्टो नीलरथः सर्वं तस्योदन्तं परिपृच्छति स्म, सर्वं परिप्रश्नेन तं कुलेन गुणेन शीलेन च स्वसम्बन्धयोग्यं राजकुमारं विज्ञाय तस्मै चित्रसेनानाम्नीं चित्ररथकनीयसीं दुहितरं राज्यचतुर्थभागसहितां विवाहविधिना ददौ। ततः प्रभृति चन्द्रसेनश्चन्द्राननया दयितया तया चित्रसेनया सह निष्कण्टकं राज्यसुखमनुभवति।

अथैकदा कस्मिन्नप्युत्सवसमये स चन्द्रसेनः स्वश्वशुरस्य राज्ञो नीलरथस्यागारं गच्छन् अकस्मात् पथि तं वञ्चकं वणिजमागच्छन्तं ददर्श। दृष्ट्वा

च तुरङ्गादवतीर्य तमालिलिङ्ग । वञ्चकस्तु तं दृष्ट्वा 'कथमत्रापि स एव राजकुमारः, स्फोटिताक्षोऽप्यक्षिमान्'–इति ततः पलायाञ्चक्रे भयात् । पलायमानं तं वणिजमनुधावद्भिः स्वपदातिभिरानाय्य स उदारहृदयो राजकुमारः पुनर्भृशमाश्लिष्य मित्रलाभपरितुष्टो राजकुलगमनं परिहृत्य तेन साकं निजगृहमागत्य सबहुमानमासने समुपवेश्य तमित्थमपृच्छत्–मित्र ! कथय वार्ताम्, तथा लब्धधनोऽपि कथमित्थं दुरवस्थोऽसि इति । वणिगुवाच–'स्वकर्मफल-परिणामेन' । कुमार उवाच–'मित्र ! विस्मर तत्, अन्यत् कथय, कथं दुर्बलोऽसि ?' वणिगुवाच–'कुमार ! वणिगहं स्वभावलुब्धः, तेन भवदीयधनेन वाणिज्यार्थं वहित्रमारुह्य समुद्रपारं गतोऽस्मि । तत्र बहुगुणं वाणिज्यमभूत् । ततो निवर्तमानस्य मे वहित्रं तटनिकटे समुद्रे निममज्ज । धनानि नष्टानि, दैवात् कथंचित् प्राणमात्रावशेषोऽहमागतोऽस्मि । तत प्राणान् मम सापराधस्य गृह्णातु कुमारः' । चन्द्रसेन उवाच–'मित्र

न भेतव्यम्, त्वं मम मित्रमसि, यावज्जीवं परिपालनीया सतां मैत्री, वित्तं विनष्टमिति तत्राधिकां चिन्तां न करिष्यसि, ततोऽप्यधिकमपरं वित्तं ते दास्यामि'। वणिगुवाच--कुमार ! नेदं प्रत्यति स्वापराधमुषितं मे हृदयम्, मम न कोऽपि त्वयि मित्रानुरूपो व्यवहारः, तत् कथं मयि प्रसीदति भवान् ?' चन्द्रसेन उवाच--मित्र ! ममायत्तं मत्कर्म, भवतः कृतेरहं कः ? तथाहि--

भवान् धत्तां किञ्चिद्, भवतु पदवी कापि भवतः,
मया तु त्वन्मैत्रीप्रवणमनसा किं न विहितम् ?
परित्यक्तं राज्यं स्वजनसहितं हन्त ! विपुलं
स्वकृत्यं स्वायत्तं, न परकृत्ये प्रभुरहम् ।

एतच्च पद्यं श्रुत्वा लज्जाविदीर्णहृदयो वञ्चकः पञ्चत्वं जगाम। कुमारस्तन्मरणदुःखेन सुतरां हरोद। स्वामिनं रुदन्तं दृष्ट्वा चित्रसेनोऽब्रवीत्--कोऽयम् ? कुत आगतः ? कस्मात् मृतः ? कुतश्च भवानित्थं करुणाधीनोऽश्रूणि मुञ्चति ?

चन्द्रसेन उवाच-पुरानेन महत्युदारता कृता,

यतो धनापहारकेणाप्यनेन स्वहस्तपतितोऽप्यहं समूल-घातं न हतोऽस्मि।

चित्रसेन उवाच--सोऽस्य प्रमादः, न तु ज्ञान-पूर्वको व्यापारः। चन्द्रसेन उवाच--तथापि महानेवायं यतो लज्जया प्राणान् तत्याज। दुर्दैव-वशात् कुपथमाश्रिताः कुलीना एव लज्जामनुभवन्ति।

ततः कुमारस्तस्य वणिजस्तत्सजातीयद्वारा संस्कारम् और्ध्वदेहिकं च कारितवान्।

## शब्दार्थ

**गरुत्मतः**=गरुड़ या किसी भी साधारण पक्षी का। **गुंजाफलप्राया**=रत्तीभर। **विश्रम्भप्रस्तावे**=विश्वास के योग्य प्रस्ताव के समय। **अदृष्टदर्शनम्**=न देखे हुए। **परावर्त्य**=लौटकर। **शस्त्रीमादाय**=छुरी लेकर। **निरवलम्बः**=बिना सहारे का। **भिषजां वरैः**=उत्तम वैद्यों से। **विपन्निस्तीर्णा**=आपत्ति कट गई। **नीलरथस्यागारम्**=नीलरथ के घर। **पदातिभिरानाय्य**=प्यादों से लिवाकर। **वहित्रमारुह्य**=जहाज या नौका में चढ़कर। **स्वापराधमुषितम्**=अपने ही अपराध से ठगा हुआ। **और्ध्वदेहिकम्**=मरने के बाद होने वाला श्राद्ध आदि।

## अभ्यास

(क) बनिये ने राजपुत्र को किस छलनीति से बहकाया?

(ख) विदेश में जाते हुए राजपुत्र के साथ उसने क्या व्यवहार किया?

(ग) चन्द्रसेन को चक्षुप्राप्ति कैसे हुई?

(घ) दूसरी बार बनिये के साथ मिलने पर चन्द्रसेन ने कैसा बर्ताव किया?

(ङ) इस कथा से क्या शिक्षा मिलती है?

१—गोदावरीतीरे । तन्नगरनिवासिना । कृतार्तनादः । समुद्राभिधानः । शुद्धहृदयम् । सुखग्राह्यधनः । अन्यकर्णपथगामिनी । लताबद्धसर्वगात्रस्य । करुणाधीनः—इन समस्त पदों के विग्रह और समासों के नाम बताओ ।

२—इनमें सन्धिविच्छेद करो :—

पितरावावाभ्याम् । श्येनस्यवेतरे । केनाप्युपायेन । वणिगुवाच । यन्मम । तावच्चक्षुः ।

३—इन समस्त पदों में विग्रह सहित समास दिखाओ :—

गुञ्जाफलप्राया दुर्जनस्य प्रकृतिः परिणामविरसाप्यापातसुरसा भवति ।

४—चिन्तितम् । दृष्ट्वा । कृतम् । नीत्वा । परावर्त्य । निद्राणः । आनीय । भोजयित्वा । चिकित्स्यमानोऽपि । विधेयम् । प्रकृति प्रत्यय बताकर वाक्यों में प्रयोग करो ।

५—कियतापि कालेन यूथिकापुरं जगाम । रेखाङ्कित पदों के कारक लिखो ।

६—'उद्दिश्य' । 'विज्ञाय' । 'आश्लिष्य' । 'परिहृत्य'—इनके प्रकृति प्रत्यय बताकर यह भी बताओ कि प्रत्येक के साथ कौन-कौन से उपसर्ग जुड़े हुए हैं ।

७—परिपृच्छति स्म । यहां स्म के प्रयोग से अर्थ में क्या परिवर्तन हुआ ? संभवति । इस क्रिया में "सं" उपसर्ग क्या आवश्यकता रखता है ?

८—निम्नलिखित पदों में संधि करो :—

आसीत्+गोदावरी । तत्+अयम् । अननुभूत+अनुभवः+च । मम+उत्कृष्टा । तथा+एनम् ।

९—वणिज् के तृतीया में, गरुत्मत् के षष्ठी में रूप लिखो ।

———

# कविशिरोमणिः कालिदासः

संस्कृतसाहित्यजगति कालिदासस्य तदेव स्थानं यद्धि आंग्लसाहित्ये शेक्सपीयरस्य ।

पात्रनिर्माण एव केवलं कालिदासः शेक्सपीयरात् भिद्यते । कालिदासस्य पात्राणि आदर्शभतानि सन्ति, यदानीं शेक्सपीयरः संसारिकपात्रनिर्माण एव परमचातुरीप्रदर्शनम् बहु मन्यते ।

संस्कृतसाहित्यमद्यापि तस्य काव्यकुसुमानाम् परिमलेन अध्येतृणाम् अध्यापकानाम् च चेतांसि नितरां प्रमोदयति ।

यथा मालतीकुसुमैः ग्रथिता स्त्रक् कामम् अनधिगतपरिमलापि सती दर्शकानाम् दृशं हरन्ती आत्मानं परिचाययति, तथैव कालिदासोक्तयः अविदितगुणा अपि श्रोतृणाम् कर्णेषु मधुनो धारा वमन्त्यः स्वनिर्मातारं पुरत एव उपस्थापयन्ति । एतदेव भवति कविकर्मं, यन्निर्वाहयितुं कविरयं सर्वतः सफलोऽभवत् ।

"अयं कविसम्राट् कं देशं स्वजन्मना अलञ्चकार, कञ्च कालं स्वर्णभासा द्योतयामास"-इति इतिहासानुशीलनव्यसनिनः पुरातत्त्वगवेषकाः महता श्रमेणापि एतत्संदेहशोधने अक्षमा एव तिष्ठन्ति--इति खिद्यतेतराम् चेतः काव्यरसिकानाम्।

अद्धाः बह्व्यो जनश्रुतयः अहमहमिकया तस्य देशकालौ स्प्रष्टुं यतन्ते, परं तासु काचिदपि अस्मदभीष्टप्रयोजनं निर्वोढुं न प्रवर्तते, अतः ततो विरम्यते।

"कविता स्वभावसिद्धैव चमत्कारं जनयति, नतु शिक्षया अभ्यासेन च साधिता" इत्यत्र कस्यचिदपि साहित्यिकस्य भेदकरी मतिः नोपतिष्ठते। शिक्षया अभ्यासेन च रचितकवितायां पदविन्यासः तथा मधुरिमसमन्वितो न भवति, यथा स्वतःसिद्धकविताप्रवाहस्य ललितपदचयनप्रकारः। कालिदासस्य कृतिषु च अयमुत्कर्षः पराकाष्ठां गतवानस्ति।

तस्य निर्मितयः श्रवणत एव चित्तं तथा व्याप्नुवन्ति, यथा अनलः शुष्कमिन्धनम्। इममेव तस्य महिमानम् उद्दिश्य केनचित् प्राचीनसमालोचकेन-

"न खलु कालिदासस्य पित्रादि कुलं वा कश्चित् जानाति, न वा दानादिकं किञ्चित् प्रसिद्धम्, येन तादृशं यशः स्यात्, किन्तु काव्यमेव तस्य कारणम्"—इति यशोगानं कृतम् ।

स च रघुवंशकुमारसंभवनाम्नी द्वे महाकाव्ये, विक्रमोर्वशीय-मालविकाग्निमित्र-शाकुन्तलानि त्रीणि रूपकाणि, ऋतुसंहार-मेघदूतनामकं गीतिकाव्यद्वयं च निर्ममे ।

एताश्च तस्य कृतयः प्रसादगुणशालिन्यः दोष-रहिताः उपमाद्यलंकारसज्जिताश्च रसिक-चित्तं बहु रञ्जयन्ति । यथा अगाधेऽपि स्वच्छजलाशये तलस्पर्शीनि वस्तूनि जनैः सुव्यक्तं दृश्यन्ते, तथैव प्रसन्नासु तत्कृतिषु काव्य-महिम्नः उत्पादकाः भावाः, अलंकारादयश्च स्पष्टमेव दर्शनपथमवतरन्ति । पदानां चयन–प्रकारेण वाक्यगुंफनशैल्या च तत्कृतयः अनर्गलम् उच्चार्य्यमाणाः पाठकानां मनो विनोदयन्ति ।

कालिदासस्य काव्येषु कतिपयानि पद्यानि तस्य चातुर्वर्ण्ये चातुराश्रम्ये च भूयसीं श्रद्धां दर्शयन्ति ।

बहुत्र च एतदपि व्यक्तं भासते यदयं सांख्ययोगयोरेव पक्षपाती आसीत्। परं साधारणतः अयं सर्वेषु विद्यास्थानेषु निष्णात आसीत्—इत्यत्र तु नास्तिलेशमात्रोऽपि सन्देहः। तदुत्तरकालवर्तिनः कवयः तस्य गुण-गरिमाणं मुक्तकण्ठं कीर्तयन्तः काव्यकलायाम् बहुधा तमुपजीवयन्ति।

इतः सहस्रशः वर्षेभ्यः प्रागेव स दिवमुपजगाम, परमद्यापि स यशःशरीरेण जीवति, इत्यत्र न सन्दिग्धे कश्चिदपि विपश्चित्।

## शब्दार्थ

**चातुरीप्रदर्शनम्**=चतुराई दिखाना। **परिमलन**=खुशबू से। **स्रक्**=माला। **परिचाययति**=वाकफीयत देते हैं। **वमन्त्यः**=उगलती हुई। **निर्वाहयितुम्**=निभाने को। **पुरातत्त्वगवेषकाः**=प्राचीन चीजों की ढूँढ़ करने वाले। **निर्वोढुम्**=निभाने को। **पराकाष्ठाम्**=अन्तिम सीमा को। **अर्नगलम्**=बे-रोकटोक। **रञ्जयन्ति**=खुश करते हैं। **निष्णातः**=चतुर।

## अभ्यास

(क) कालिदास तथा शेक्सपीयर में क्या अन्तर है?

(ख) संस्कृत कवियों में कालीदास की श्रेष्ठता का क्या कारण है?

(ग) इसकी रची पुस्तकों का नाम से निर्देश करो।

१—संधि-विच्छेद करो :—

तदेव। निर्माण एव। तथैव। अस्मदभीष्टम्। उपमाद्यलंकारसज्जिताश्च। यन्निर्वाहयितुम्।

२—भिद्यते। प्रवर्तते। व्याप्नुवन्ति। जानाति। स्यात्। निर्मम— इन क्रियाओं के धातु, लकार, पुरुष और वचन बताओ।

३—दृशम्। हरन्ती। चेतांसि। तासु। कवयः। ये शब्द किस लिङ्ग में कौन-सी विभक्ति तथा वचन में बनते हैं।

४—मालतीकुसुमैः। कालीदासोक्तयः। अविदितगुणाः, ललितपदचयनप्रकारः—इनका सविग्रह समास लिखिये।

५—यथा और तथा का प्रयोग वाक्य में किस ढंग से करना चाहिये, प्रयोग करके बताओ।

६—अव्यय किसे कहते हैं ?

---

# गीतोक्त-सुधा

तमुवाच हृषीकेशः प्रहसन्निव भारत ।
सेनयोरुभयोर्मध्ये विषीदन्तमिदं वचः ॥१॥
अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे ।
गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः ॥२॥
देहिनोऽस्मिन् यथा देहे कौमारं यौवनं जरा ।
तथा देहान्तरप्राप्तिः धीरस्तत्र न मुह्यति ॥३॥
मात्रास्पर्शास्तु कौन्तेय शीतोष्णसुखदुःखदाः ।
आगमापायिनो नित्याः तांस्तितिक्षस्व भारत ॥४॥
यं हि न व्यथयन्त्येते पुरुषं पुरुषर्षभ ।
समदुःखसुखं धीरं सोऽमृतत्वाय कल्पते ॥५॥
अविनाशि तु तद् विद्धि येन सर्वमिदं ततम् ।
विनाशमव्ययस्यास्य न कश्चित् कर्तुमर्हति ॥६॥
य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम् ।
उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥७॥
आश्चर्यवत् पश्यति कश्चिदेनम्,
आश्चर्यवत् वदति तथैव चान्यः ।

आश्चर्यवच्चैनमन्यः शृणोति
श्रुत्वाप्येनं वेद न चैव कश्चित् ॥८॥
न जायते म्रियते वा कदाचित्,
नायं भूत्वा भविता वा न भूयः।
अजो नित्यः शाश्वतोऽयं पुराणः,
न हन्यते हन्यमाने शरीरे ॥९॥
देही नित्यमवध्योऽयं देहे सर्वस्य भारत।
तस्मात् सर्वाणि भूतानि न त्वं शोचितुमर्हसि ॥१०॥
नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः।
न चैनं क्लेदयन्त्यापः न शोषयति मारुतः ॥११॥
सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ।
ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि ॥ १२॥
अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च।
नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः ॥१३॥
क ण्येवाधिकारस्ते मा फलेषु कदाचन।
मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि ॥१४॥
योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा फलानि च।
सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते ।१५॥

स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव ? ।
स्थितधीः किं प्रभाषेत? किमासीत व्रजेत किम् ? ॥१६॥
प्रजहाति यदा कामान् सर्वान्पार्थ मनोगतान् ।
आत्मन्येवात्मना तुष्टस्थितप्रज्ञस्तदोच्यते ॥१७॥
दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः ।
वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते ॥१८॥
यः सर्वत्रानभिस्नेहस्तत्तत् प्राप्य शुभाशुभम् ।
नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता ॥१९॥
यदा संहरते चायं कूर्मोऽङ्गानीव सर्वशः ।
इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥२०॥
ध्यायतो विषयान् पुंसः संगस्तेषूपजायते ।
संगात्संजायते कामः कामात् क्रोधोऽभिजायते ॥२१॥
क्रोधाद् भवति संमोहः संमोहात् स्मृतिविभ्रमः ।
स्मृतिभ्रंशाद् बुद्धिनाशो बुद्धिनाशात् प्रणश्यति ॥२२॥
रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन् ।
आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति ॥२३॥
प्रसादे सर्वदुःखानां हानिरस्योपजायते ।
प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठते ॥२४॥

## शब्दार्थ

**विषीदन्तम्**=दुःखी हो रहे। **अशोच्यान्**=न शोक करने योग्य। **प्रज्ञावादान्**=ऊँची अकल की बातें। **मात्रास्पर्शाः**=इन्द्रियों से सम्बन्ध रखने वाले। **आगमापायिनः**=आने जाने वाले। **अवध्यः**=न मारने योग्य। **क्लेदयन्ति**=गीला करते हैं। **समत्वम्**=बराबरी। **स्थितप्रज्ञस्य**=स्थिर बुद्धिवाले को। **कामान्**=इच्छाओं को। **वीतरागभयक्रोधः**=जिसकी आसक्ति, भय और क्रोध नष्ट हो चुके हैं। **अनभिस्नेहः**=प्रेम या आसक्ति से शून्य। **संहरते**=समेट लेता है।

## अभ्यास

(क) गीता में आतमा का क्या रूप है ? किस तरह से काम करने से मनुष्य पाप-पुण्य का भागी नहीं होता ?

(ख) 'योग' किसे कहते हैं ?

(ग) स्थितप्रज्ञ किसे कहते हैं ?

(घ) प्रतिष्ठितप्रज्ञ संसार में कैसे रहता है ?

१—न चैनम्। कर्मण्येवाधिकारस्ते। कूर्मोङ्गानीव। अशोच्यानन्वशोचः—इनमें सन्धिच्छेद करो।

२—जायते। विद्धि। वेद। अनुशोचन्ति। मुह्यति। तितिक्षस्व। शृणोति——इनमें धातु, लकार, पुरुष और वचन दिखाओ।

———

# लोकानुवर्तनम्

अनात्मबुद्धिप्रामाण्यो लोकं यस्त्वनुवर्तते ।
निकार्यते स निर्मथ्य प्रतिघातिभिराशयैः ।।

कश्चिद्रजकः पुत्रेण सह नगरीं गत्वा परिचर्याक्षमं रासभमेकं मूल्येन गृहीत्वा स्वग्रामं प्रति निवर्तमान आसीत् । मध्येमार्गमापतिताः केचन कर्मान्तिकाः 'अध्वपरिश्रमानुचितं बालं सत्यपि वाहने किमेवं क्लेशयसि ?'—इति तं रजकमाहूय प्रोचुः । 'सम्यगुद्बोधितोऽस्मि भवद्भिः'—इति तेषामाशयमभिनन्दन् सोऽपि तनयं रासभपृष्ठमध्यारोपयत् ।

अथ कंचिदध्वानं व्रजतोरनयोः पुनः कतिचन पथिकाः संमुखीभूय सविगर्हमेवमालापं मिथश्चक्रुः— 'पश्यतैतमविनीतं कुमारम् । वृद्धे पितरि पादचारिणि स्वयं निश्शङ्कं वाहनारोहमनुभवति । विषमोऽयं कालो यस्मिन् गुरवोऽपि लघु तोल्यन्ते'—इति । तत् श्रुत्वा लज्जितो रजकबालो गर्दभादवरुह्य पितरं गर्दभपृष्ठमधिष्ठापयितुं प्रार्थयत । पितापि लोकसंमतम् अनुसर्तुमिच्छुः तथा चकार ।

ततः कियन्तमध्वानं गतयोस्तयोः काश्चन

योषितस्तटाकादुत्तीर्य उदककुम्भैर्गृहानभिनिवर्तमानाः तं रजकवृद्धं प्रेक्ष्य सोपहासमब्रुवन्—'अहो निर्लज्ज एष वृद्धनिर्णेजकः कण्टकाश्मविषमे मार्गे सायासमनुसर्पन्तं बालकमुपेक्ष्य स्वयं यानेन याति। पीवरोऽयं करभः किं विपद्येत, यदि वृद्धस्य पृष्ठतो बालोऽयमप्यारोहेत् ?'—इति। वृद्धः स्वमन्दमतितां निन्दन् पुत्रमुत्थाप्य गर्दभस्य पश्चार्धे न्यवेशयत्।

एवं गर्दभं वाहयन्तौ तावुभौ प्रेक्ष्य कोऽपि कारुणिकः स्थविरो निजगाद—'धिक् युवयोर्नृशंसताम्! कष्टमयं खरपोतको भग्नपृष्ठास्थिनालो विपत्स्यते। किममुं न पश्यथः फेनायमानवदनं निष्पतज्जिह्वमतिमात्रं निश्वसन्तम्? कथं सुदृढौ शोचनीयावस्थम् एनमंसे धृत्वा न नयथः?'—इति। तदा सानुशयौ तौ गर्दभादवप्लुत्य, 'दिष्ट्या अविपन्न एव रासभे साधुनाऽनेन प्रतिबोधितौ स्वः'—इति वदन्तौ करभस्य चरणानि सुदीर्घे वंशदण्डे दामभिर्नियन्त्र्य मृतमिव तं स्कन्धयोरवस्थाप्य ऊहतुः।

अनयोर्विलक्षणमाचरितं दृष्ट्वा सर्वे मार्गगामिनो जहसुः। गर्दभस्तु चरणयन्त्रणेन भृशं वेदनामनुभवन् रज्जुवित्रोटनायाङ्गभङ्गैः पाद-

प्रसारणाकुञ्चनप्रयत्नैरपि कष्टं विचेष्टमान आसीत् । अथ तौ करभवाहकौ मार्गे उद्बुद्बुदप्रवाहविनादिन्याः सरितः संक्रमं प्रापतुः । तत्क्षणं दैवयोगात् रासभस्य पादरज्जुश्चिच्छदे । त्रुटितबन्धनश्च खरो मोक्षहेतोः स्वकृतायाश्चेष्टाया वेगेनैवोत्क्षिप्तः परेण संक्रमं प्रवाहे निपपात ।

एवमात्मतुष्टिम् अप्रमाणीकृत्य लोकस्य भिन्नरुचेः समाराधने बद्धश्रद्धा बालिशाः शोकमुपयान्ति ।

## शब्दार्थ

रजकः = धोबी या रंगने वाला । परिचर्या = सेवा । क्लेशयसि = दुःख दे रहे हो । सविगर्हम् = निन्दा के साथ । अविनीतम् = ढीठ । योषितः = स्त्रियां । मन्दमतिता = मन्दा मतिः यस्य, तस्य भावः (मूर्खता) । नृशंसताम् = कठोरता को । अंसे = कंधे पर । निर्णेजकः = वस्त्र साफ करने वाला । दिष्टया = (अव्यय) सौभाग्य से । पादप्रसारणाकुञ्चनप्रयत्नैः = पादानाम् प्रसारणम् आकुञ्चनम् च तयोः प्रयत्नैः—पांओं के खोलने तथा सिकोड़ने की चेष्टाओं से । उद्बुद्बुदप्रवाहविनानिदन्यः = उठ रहे बुलबुलों के प्रवाह से शब्द करती हुई ।

## अभ्यास

(क) रजक के चरित को देखकर मार्गगामी लोग क्यों हँसने लगे ?

(ख) इस कहानी का सारांश देकर इससे क्या शिक्षा मिलती है—इसका भी निर्देश करो ।

१—गृहीत्वा । अभिनन्दन् । आरुह्य । अवप्लुत्य । विचेष्टमानः—इनमें

प्रकृति प्रत्यय दिखाकर निम्नलिखित पदों में विग्रह तथा समास बताओ :—

२—परिचर्याक्षमम्। मध्येमार्गम्। भग्नपृष्ठास्थिनालः। चरणयन्त्रणेन। त्रुटितबन्धनश्च। भिन्नरुचेः।

३—वदत्। युष्मत्। इदम्। रज्जु। आत्मन्—इनके पञ्चमी तथा सप्तमी के रूप लिखो।

४—निजगाद। विपत्स्यते। आरोहतुः। विपद्येत—ये किस धातु, किस लकार तथा किस पुरुष के रूप हैं।

# महात्मा गान्धी

परोपकारैकधियः स्वसुखाय गतस्पृहाः ।
जगद्धिताय जायन्ते महात्मानो महाव्रताः ॥

'महात्मा' इति 'बापू' इति च लोके प्रसिद्धस्य विश्ववन्द्यस्य श्रीमोहनदासगान्धिमहोदयस्य नाम नूनं कस्यापि न अविदितम् । चिरकालाद् दासत्वं गतस्य भारतवर्षस्य पुनरपि स्वतन्त्रतायाः संपादकोऽयं महापुरुषः १८६९ तमे ईसवीयाब्दे अक्टूबरमासस्य द्वितीये दिनाङ्के काठियावाडप्रान्तस्य 'पोरबन्दर' नाम्नि नगरे श्रीकर्मचन्दगान्धिनः श्रीमत्यां पुतलीबाईदेव्याम् अजायत ।

स्वपित्रोश्चतुर्षु अपत्येषु कनिष्ठः मोहनदासः शैशवादेव मितभाषी, सत्यप्रियः, विनयावनतः, मातापितृसेवापरायणः, ईश्वरभक्तश्च आसीत् । आसप्तमवर्षं श्रीमोहनदासः पोरबन्दरे एव शिक्षामग्रहीत् ।

तदनन्तरं तस्य पिता राजकोटराज्यस्य अमात्य-

पदमङ्गीकृत्य तत्र गतः । श्रीमोहनदासोऽपि स्वपित्रा सह राजकोटनगर एव स्थितो माध्यमिकीं शिक्षाम् अग्रहीत् । तत्रैव संस्कृतभाषाया अध्ययनेऽप्यस्य रुचिः अजायत । विद्यालये पठन् अयं दुर्वृत्तैः सहाध्यायिभिः धूम्रपानादिदुराचारेषु प्रलोभ्यमानोऽपि सत्यवादित्वेन स्वकीयसत्संस्काराणां प्रभावाच्च सन्मार्ग एवातिष्ठत् ।

तदानीन्तनलोकाचारम् अनुरुध्य पितृभ्यामस्य त्रयोदशवर्षदशीयस्यैव विवाहः कारितः । भार्याऽस्य कस्तूरबानाम्नी पतिपरायणा, धर्मप्राणा, स्नेहशीला, चासीत् । दुर्भाग्यवशात् प्रवेशिकापरीक्षार्थमधीयानस्यैव अस्य पिता स्वर्गमगमत् ।

सप्तदशवर्षोऽयं प्रवेशिकापरीक्षाम् उदतरत् । तदनन्तरं च विधानशास्त्रस्याध्ययनार्थं 'बैरिस्टर' पदवीग्रहणार्थं च आङ्गलदेशं प्रति गमने मतिं चकार । 'धर्मविरुद्धा समुद्रयात्रा' — इति ज्ञातिजनैः निवारितोऽपि मांसमदिरासेवनादिदुराचारपरिवर्जनार्थं मातुरग्रे प्रतिज्ञां कृत्वा, तस्या अनुमतिं गृहीत्वैव आङ्गलदेशं जगाम ।

तत्र देशे निवसतः अस्य तत्रत्याचारानुसारेण

नृत्यवादनादिशिक्षायै रुचिरजायत । यत्नश्च समारब्धः । परम् अचिरेणैव सहसाऽस्य मोहो नष्टः प्रबोधश्चोत्पन्नः । सोऽचिन्तयत्--'न मया यावज्जीवनमत्र वस्तव्यम्, सदाचरणस्यैव महान् महिमा, अध्ययनार्थमेव अहमत्र समागतः, किं ममाङ्गलसभ्यताया अनुकरणेन'--इत्येवं नृत्यादिशिक्षामोहं परित्यज्य स्वकीयाध्ययनपरायण एवाभवत् । एतस्मिन्नेवकाले विशेषतो धर्मजिज्ञासापि अस्य हृदये प्रादुरभूत् । अत एवैकस्य आङ्गलमित्रस्य प्रेरणया 'बाइबिल' धर्मपुस्तकमपठत् । तदनन्तरं चान्यपुस्तकैः सह भगवद्गीताया अपि स्वाध्यायमकरोत् ।

तदेवमाङ्गलदेशस्य 'लन्दन' नगरे सदाचाररक्षणपूर्वकं विधानशास्त्रं वर्षत्रयं यावत् सम्यग्धीत्य 'बैरिस्टर' पदवीं चाधिगत्य १८९१ तमे ईसवीयाब्दे श्रीमोहनदासगान्धी भारतवर्षं प्रत्याजगाम । आगत एव स्वमातुः निधनवार्त्तामशृणोत्, यत् श्रुत्वा शोकावेगेन सहस्रधेवास्य हृदयं व्यदीर्यत । किंचित्कालानन्तरं व्यवहारविद्यामुपजीवता अनेन मुम्बापुर्यां वासः स्वीकृतः । तत्र निवसतोऽस्य व्यवहारशास्त्रपाण्डित्यं सत्यप्रियत्वं च लोकैर्ज्ञातम् । गच्छति काले व्यवहारमेकं समर्थयितुं केनचित् श्रेष्ठिना

सः १८९३ तमे ईसवीयवत्सरे दक्षिणाफ्रीकाभूमण्डलं प्रेषितः ।

तदेतद् दक्षिणाफ्रीकागमनं श्रीगान्धिनो जीवन-वृत्ते अतीव महत्त्वमावहति । दक्षिणाफ्रीका-प्रवासेनैव प्रथमतः तस्य महान्तो गुणाः--सत्यपरता, नेतृत्वशक्तिः, संघटनयोग्यता, अन्यायासहिष्णुता, कष्टसहिष्णुता, इत्यादयः--प्राकाश्यं पुष्टिंचोपगताः ।

तस्मिन् भूमण्डले हि गौराङ्गाः तदानीं--'कृष्णवर्णा भारतीयाः ।'--इत्यस्मादेव कारणात्तान् विविधं पीडयन्ति स्म, सावमानं च तैः सह व्यवहरन्ति स्म । अत्याचारेणानेन विक्षुब्धा अपि भारतीया नेतारं विना किंकर्तव्यविमूढा आसन् । श्रीगान्धिना सर्वं दारुणं वृत्तमेतत् श्रुतम्, स्वयं चाप्यनुभूतम् ।

तत्रत्यभारतीयानां बहुशः प्रार्थनया स्वकीयान्तः-प्रेरणया च निश्चितं तेन तत्प्रतीकारार्थम् । ततश्च वर्णविद्वेषजनितस्य अत्याचारस्य दुरवस्थायाश्च प्रतीकारार्थं तेन नेटालप्रदेशे 'इण्डियनकांग्रेस' (भारतीयमहासभा) इति नाम्ना महापरिषदेका

संस्थापिता । 'इण्डियन-ओपीनियन' इति नाम्ना समाचारपत्रमप्येकं प्रवर्त्तितम् । एवं भारतीयानां न केवलं संघटनशक्तिरेव, किन्तु आन्दोलनशक्तिरपि प्रवृद्धासीत् । परमेवं तत्रत्यानां गौराङ्गाणां प्रद्वेषभावना अत्याचारप्रवृत्तिश्च न्यूनतां न गता, प्रत्युत उग्रतरैवाभवत् । भृशं प्राहरंश्च ते एकदा श्रीगान्धिनमपि ।

एवं पीडितोऽपि श्रीगान्धी गौरांगशासकैः; प्रसिद्धे बोरयुद्धे—बोरजातीयानामेव पक्षोऽन्यायापेतः-इत्यवगम्य तद्विरुद्धं गौराङ्गशासकानामेव साहाय्यं चकार । तदेवं प्रकटीकृता तेनात्मनो लोकोत्तरा न्यायप्रियता उदारता च । परं तस्मिन् युद्धे विजयं प्राप्य गौरांगशासका वर्णभेदकं विधानं पुरस्कृत्य भारतीयान् दक्षिणाफ्रीकात एव निर्वासयितुं प्रायतन्त । एतस्मिन्नेवान्तरे तैर्नूतनेन विधानान्तरेण भारतीयानां 'ट्रांसवाल'-नगरे न केवलं प्रवेश एव निषिद्धः, परं तेषां विवाहपद्धतिरपि अमाननीयत्वेन घोषिता ।

तदेतत् सर्वं विपरीतं घटनाचक्रं विपरिवर्तयितुं बद्धपरिकरः श्रीगान्धी द्विगुणेनोत्साहेन स्वकार्ये प्रावर्तत । अचिन्तयच्च अश्रुतपूर्वस्य अदृष्टपूर्वस्य च

विपरीतवातावरणस्य तस्य प्रतीकारार्थं कञ्चिल्लोकोत्तरमुपायम् ।

सत्यस्याहिंसायाश्च सिद्धान्तस्याधारेण सत्याग्रहेति प्रसिद्धोऽत्यद्भुत उपायो निर्धारितः तेन तेषामत्याचाराणां प्रतीकाराय । प्रारब्धे तु सत्याग्रहान्दोलने श्रीगान्धिना सहैवान्येऽपि सहस्रशो भारतीयाः कारागारे पातिताः बहुविधमत्यन्तं क्लेशिताश्च । परम् अन्ततस्तेन साफल्यमधिगतम् । सत्याग्रहप्रभावेण स भारतीयानां दक्षिणाफ्रीकास्थितानां दुःखान्यपाकरोत् । तस्यैष विजयो राजनीतौ नूतनस्य युगस्य प्रारम्भ आसीत् ।

अथ दक्षिणाफ्रीकाप्रदेशेऽभूतपूर्वं विजयमधिगत्य प्रख्यातकीर्त्तिर्महात्मा १९१५ ईसवीयाब्दे भारतदेशं प्रत्यागच्छत् । किञ्चित्कालानन्तरं चम्पारनप्रदशे तत्रत्यान् कृषीवलान् गौराङ्गभूस्वामिनामत्याचारेभ्यः समुद्धर्तुं सत्याग्रहान्दोलनमारभत । शीघ्रमेव च साफल्यमाप । एवमेवासौ खेडामण्डलस्थानां कृषकाणां कष्टान्यपि सत्याग्रहसाहाय्येनैवापाकरोत् । सत्यम्, अहिंसाम् च प्राधान्येन आश्रित्य निर्भीकतया आङ्गलशासनस्य विरोधे

विविधम् असहयोगान्दोलनं प्रवर्तितम् । अहिंसा रूपेणैव लोकोत्तरेण अश्रुतपूर्वेण अस्त्रेण प्रायः शताब्दीद्वयात् भारते साग्रहम् आधिपत्यं कुर्वाणान् आङ्गलान् पारेसमुद्रं प्रेषितवान् । सत्यस्य विजयो जातः, भारतं स्वतन्त्रं सम्पन्नम् । भारतस्य राष्ट्रपितेति तस्य महापुरुषस्य व्यपदेशः सर्वत्र विश्रुतोऽभवत् ।

ईदृशो महात्मा पर्यन्ते कस्यचिद् अदूरदर्शिनो भारतीयस्य कोपानले स्वात्मानम् अजुहोत् । एतादृशो महापुरुषस्य जीवनं मरणञ्चापि परार्थ एव संवृत्तम् ।

## शब्दार्थ

नूनम्=निश्चित । रुचिः=शौक । दुर्वृत्तः=बुरी आदतोंवाले । सहस्रधा=
तदानीन्तन=उस समय के । अधीयानस्य=पढ़ रहे का । सहस्रधा=
हजार तरह से । अन्यायासहिष्णुता=जुल्म न सह सकना । तत्र-
त्यानाम्= वहां के । दारुण=सख्त । भावना=विचार । निर्वास-
यितुम्=निकालने को । बद्धपरिकरः=कमर बांध । सत्वाहिंसाम्=
प्राणि-हिंसा को । अपाकरोत्= दूर किया ।

## अभ्यास

(क) महात्मा गान्धी पर विदेशीय खान-पान का प्रभाव क्यों नहीं पड़ा ?

(ख) महात्मा गान्धी के चरित्र को अपनी भाषा में प्रकट करो ।

(ग) अहिंसा तथा सत्याग्रह पर भी प्रकाश डालो ।

१—सत्यव्रतः। घटनाचक्रम्। द्विगुणेन। अन्यायोपेतः। किंकर्तव्य-विमूढः। संघटनशवितः। विद्यालयः। गतस्पृहः। जगद्धितम्। अध्ययन-परायणः—इनमें समास तथा लौकिक विग्रह दिखाओ।

२—ग्रह्। नय्। अस्। तिष्ठ्—इन धातुओं के लट् तथा लृट् लकार के प्रथम और उत्तम पुरुष के रूप लिखो।

३—रुचिः + अजायत। अधीयानः + अपि। अध्ययने + अपि + अस्य—इनमें सन्धि करो।

---

# स्वगुणा उत्कर्षहेतवः

बभूव तीरभुक्तौ रविधरो नाम ब्राह्मणः । स मूर्खो धनाढ्योऽपि वागपाटवेन सर्वैरुपहस्यमानः परम-दुःखितश्चिन्तयामास--

मृषा वदति लोकोऽयं ताम्बूलं मुखभूषणम् ।
मुखस्य भूषणं पुंसः स्यादेकैव सरस्वती ॥

एवं चिन्तयित्वा वृद्धत्वात् स्वयं पठितुमशक्तः पण्डितद्वारा धनव्ययेन मनधरनामानं पुत्रं पाठयामास । पश्चात्तस्य सहाध्यायिभिर्मनधर इत्यव्युत्पन्नं नाम श्रुत्वा पठितम्--

प्राप्नोतु नाम पाण्डित्यं पुत्रः पित्र्यप्रयत्नतः ।
ज्ञातं पितुरपाण्डित्यं नामधारणकारणात् ॥

ततस्तेनैवापमानेनाध्ययने कृतयत्नः स मनधरः शास्त्रपारगामी बभूव । पश्चादधिगतशास्त्रस्य पुत्रस्य गुण-दर्पण राजसम्मानवासनया पुत्रेण सह ब्राह्मणो राजधानीं जगाम । तत्र च कृतराजदर्शनः कुशलप्रश्ना-

नन्तरं राज्ञा पृष्टः। राजोवाच--'विप्र ! कथय वार्ताम्'। विप्र उवाच--'ज्ञानो नास्ति मेव'। तदाकर्ण्य राजानं स्मेराननं दृष्ट्वा सज्जना नम्रानना बभूवुः। खलाश्च सुतरां जहसुः। तदनन्तरं मनधर उवाच--'हे दुर्जनाः ! कुतो मम पितरं हसथ। अनधिगताभिप्रायाः सर्वे निगृहीता यूयम्। मम पित्रा तु साधूक्तं यद् देव ! प्रस्तुत-प्रश्नोत्तरे मम 'ज्ञा' नास्ति 'मेव' लक्ष्मीरिव। यथा लक्ष्मीर्न विद्यते तथा ज्ञाऽपि न विद्यते। एवं मितभाषित्वाद्वार्त्ताकथनासामर्थ्यं स्वकी नैरव्यं च भिक्षार्थिना मम पित्रा दर्शितम्'। तदाकर्ण्य राज्ञा सपरितोषेण महती पूजा कृता तस्य मनधर-शर्मणो ब्राह्मणस्य। उक्तं च 'साधु मनधर ! साधु, अस्थाने स्थानं कृतवानसि'। एवं सति मनधरस्य पाण्डित्यं तत्पितुश्च मूर्खत्वमेव निर्धारितं सर्वैः।

उक्तं च--

पुत्रेऽपि लब्धसम्माने नायशः खण्डितं पितुः।
निर्जैरेव गुणैर्लोके पुरुषो याति पूज्यताम् ॥

## शब्दार्थ

वागपाटवम्=बोलचाल में चतुर। ताम्बूलं=पान। सहाध्यायी=साथ पढ़ने वाला। पित्र्यं=पिता का। मितभाषी=थोड़ा बोलने वाला। शास्त्रपारगामी=शास्त्रों के पार तक जाने वाला (सब शास्त्रों का ज्ञाता)। नम्राननाः=मुख नीचे किये हुए। सुतराम्=(अव्यय) खूब। नैरव्यम्=निर्गतः रवः यस्मात स=नीरवः (शब्दरहित) तस्य भावः-नैरव्यम्=खामोशी।

## अभ्यास

(क) अपने पिता के बचनों पर हँसते हुए दुर्जनों का मनधर ने कैसे समाधान किया ?

१—चिन्तयित्वा। अशक्तः। पृष्टः। आकर्ण्य। कृतवान्—इन पदों में प्रकृति प्रत्यय का विश्लेषण (अलग-अलग) करो।

२—मितभाषी। वासनया। पितरम्। शर्मणः। महती—ये किन शब्दों से कौन विभक्ति तथा वचन में बने हैं ?

३—हसथ। जहसुः। चिन्तयामास—ये किस धातु, पुरुष तथा वचन के रूप हैं ?

# भोजराजस्य सिंहासनोद्धार-कथा

अथ काले भोजराजः राज्यं प्राप। तस्मिन् राज्यं कुर्वति, एकदा कश्चित् ब्राह्मणो यत्र सिंहासनं निक्षिप्तं तत् क्षेत्रं कृष्ट्वा यवादीनवपत्। तस्मिन् क्षेत्रे महत् फलमभूत्। स ब्राह्मणः यत्र तत् सिंहासनं निक्षिप्तं तदुच्चस्थानमिति मत्वा, पक्षिणाम् उत्थापनार्थं तदुपरि मञ्चं कृत्वोपविश्य पक्षिण उत्थापयति।

ततः एकदा भोजराजो विहारं कर्त्तुं सकलराजकुमारैः समवेतस्तत्क्षेत्रसमीपं यावद् गच्छति, तावन्मञ्चोपरि स्थितेन ब्राह्मणेनोक्तं--"भो राजन्! एतत् क्षेत्रं सम्यक् फलितमस्ति, ससैन्यः समागत्य यथेच्छं भुज्यताम्, अश्वेभ्यश्चणका दीयन्ताम्। अद्य मज्जन्म सफलमभूत्, यतो भवान् ममातिथिर्जातः, ईदृशः प्रस्तावः कदा सम्पद्यते?"--तत् श्रुत्वा स राजा ससैन्यः क्षेत्रमध्ये प्रविष्टः। अथ ब्राह्मणोऽपि मञ्चकादवरुह्य राजानं क्षेत्रमध्ये स्थितं भणति--"भो राजन्! किमयमधर्म्मः

क्रियते ! ! इदं ब्राह्मणक्षेत्रं विनाश्यते त्वया ? जनैः यदि अन्यायः क्रियते, प्रतीकारार्थं तुभ्यं निवेद्यते, त्वमेवान्यायं कर्त्तुं प्रवृत्तः ! ! इदानीं को वा निवारयिष्यति ? उक्तञ्च--

"गजे कण्डूगरिष्ठे च राज्ञि हारिणि वा पुनः ।
पापकृत्सु च विद्वत्सु नियन्ता जन्तुरत्र कः ?"

भवान् धर्म्मशास्त्राभिज्ञश्च, ब्राह्मणद्रव्यं कथं नाशयति ? ब्रह्मस्वमेतत् विषम् । तथाहि--

"न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते ।
विषमेकाकिनं हन्ति ब्रह्मस्वं पुत्रपौत्रकम् ।।"

--इति तेनोक्तं श्रुत्वा राजा यावत् क्षेत्राद् बहिः सपरिवारो निर्गच्छति, तावत् पक्षिणः समुत्थाप्य पुनः मञ्चमारूढो ब्राह्मणो वदति--"भो राजन् ! किमिति गम्यते ? क्षेत्रं साधु फलितमस्ति, यावन्नालकदण्डान् अश्वादयो भक्षयन्तु, उर्वारुकफलानि सन्ति, उपभुज्यन्ताम् ।" पुनर्ब्राह्मणवचनमाकर्ण्य सपरिवारो राजा यावत् क्षेत्रमध्ये प्रविशति, तावत् पक्ष्युत्थापनार्थं मञ्चादवरुह्य स पुनस्तथैव अभणत् ।

ततो राजा स्वमनसि विचारयति--"अहो आश्चर्य्यम् ! यदा अयं ब्राह्मणो मञ्चमारोहति, तदास्य चेतसि 'दातव्यं' 'भोक्तव्यम्'--इति बुद्धिरुत्पद्यते, यदा अवतरति, तदा दीनबुद्धिर्भवति, तदहं मञ्चमारुह्य पश्यामि"--इति मञ्चमारुरोह। भोजराजस्य चेतसि तदा वासना एवमभूत्-- "विश्वस्यार्त्तिः परिहरणीया, सर्व्वस्य लोकस्यापि दारिद्रयं सम्यक् निवारणीयं, दुष्टा दण्डनीयाः, सज्जनाः पालनीयाः, प्रजा धर्मेण रक्षणीयाः, किं बहुना--अस्मिन् समये यदि कश्चिच्छरीरमपि प्रार्थयिष्यते, तदपि देयम्"--इति आनन्दपरिपूर्णः पुनर्विचारयति--"अहो ! एतत् क्षेत्रमस्य एवंविधां बुद्धिमुत्पादयति। उक्तञ्च--

जले तैलं खले गुह्यं पात्रे दानं मनागपि।
प्राज्ञे शास्त्रं स्वयंयाति विस्तारं वस्तुशक्तितः॥

कथमेतत्क्षेत्रस्य माहात्म्यं ज्ञायते ?"-- इति विचार्य्य ब्राह्मणमाहूय अवादीत्--"भो ब्राह्मण ! तवैतस्मात् क्षेत्रात् कियांल्लाभो भवति ? अहमेतत् क्षेत्रं क्रेतुमिच्छामि"। ब्राह्मणेनोक्तं--"भो राजन् ! सकलकुशलेन त्वया अविदितं किमपि नास्ति, यदर्हति तत् करोतु। राजा नाम साक्षाद्विष्णो-

रवतारभूतः, तस्य दृष्टिर्यस्योपरि पतति, तस्य दैन्यदुर्भिक्षादयो नश्यन्ति । राजा हि साक्षात् कल्पवृक्षः, स त्वं मम दृष्टेर्गोचरोऽभूः, अद्य मम दैन्यदारिद्र्यादीनाम् अवसानं जातं, क्षेत्रं कियत् ?"

ततो राजा ब्राह्मणं धनधान्यादिना परितोष्य तत् क्षेत्रं गृहीत्वा मञ्चकाधः खानयितुं प्रारम्भमकार्षीत् । पुरुषप्रमाणे गर्त्ते जाते शिलैका सुमनोहरा अवलोकिता । तदधः चन्द्रकान्तशिलाविनिर्मितं, नानारत्नखचितं, द्वात्रिंशत्पुत्तलिकाभिर्युक्तम्, अतिरमणीयं दिव्यमेकं सिंहासनमपश्यत् । तत् सिंहासनं दृष्ट्वा भोजराजः परमानन्दलहरीपरिपूर्णहृदयो भूत्वा सिंहासनं ग्रामं प्रति नेतुं यावदुच्चालयति, तावदधिकं गुरु भवति, नोच्चलति च । ततो मन्त्रिणमवदत्—"भो मन्त्रिन् ! किमर्थमेतत् सिंहासनं नोच्चलति !" मन्त्रिणोक्तं—"राजन् ! एतत् सिंहासनं दिव्यमपूर्वञ्च, बलिहोमपूजादिकं विना नोच्चलिष्यति, तव साध्यञ्च न भविष्यति"—इति ।

तस्य वचनं श्रुत्वा राजा ब्राह्मणान् आहूय, तैः सर्वमपि विधानं कारितवान् । ततस्तत् सिंहासनं लघु भूत्वा स्वयमेवोच्चलति स्म ।

## शब्दार्थ

अवपत्=बो दिया। मत्त्वा=मानकर। समवेतः=मिले हुए (साथ)। कण्डूः=खुजली। नियन्ता=रोक थाम करने वाला। ब्रह्मस्वं=ब्राह्मण का धन। यावनालकं='जवार', मकाई। विश्वस्यार्तिः=जगत की पीड़ा। मनाक्=थोड़ा। कियत्=कितना। दुर्भिक्षम्=अकाल। खानयितुम्=खोदने को। साध्यम्=करने लायक। लघु=हल्का।

## अभ्यास

(क) ब्राह्मण न अपन क्षेत्र में राजा से दो विरुद्ध वचनों का प्रयोग क्यों किया?

(ख) राजा ने ब्राह्मण के वचन से क्या जाना?

(ग) क्षेत्र से निकला सिंहासन किस तरह हल्का हुआ?

१—आनन्दलहरीपरिपूर्णहृदयः, नानारत्नखचितम्। चन्द्रकान्तशिलाविनिर्मितम्। यावनालकदण्डान्, शास्त्राभिज्ञः—इनमें सविग्रह समास दिखाओ।

२—दातव्यम्। भोक्तुं। विदितम्। आरुह्य। परिहरणीयः। आरूढः—इनमें प्रकृति प्रत्यय दिखाओ।

३—क्रेतुम्। किमिति। मनागपि। दृष्टेर्गोचरः—इनका अपने वाक्यों में प्रयोग करो।

४—कथा का सारांश अपनी भाषा में दो।

---

# दशरथशापः

अजात्मजो दशरथः कदाचिद् यौवनमददुर्ललितो मृगयाविहारमाचकाङ्क्ष। तथा च श्वगणिवागुरिकप्रमुखैः परिवारैरनुगतः तुरगारूढः स शरासनं गृह्णन् वनभूमिं ययौ। तत्र च महिषवराहगवयखड्गहरिततरक्षुमुख्येषु शरव्यीकृतेषु वन्यसत्त्वेषु स निकामं व्यायामविनोदमभ्यपद्यत।

अन्ततो दशरथः कस्यचन रुरोर्वर्त्मानुसरन् असमेतपरिच्छदो निशागमसमये तमसामुपागच्छत्। तस्यास्तारतरोरधः प्रवालशय्यामधिष्ठितः स तां त्रियामामत्यवाहयत्।

अथोषसि कूजाद्भिर्विहनकुलैः प्रतिबोधितः स दूरादुच्चरन्तं द्विरदबृंहितानुकारिणं कमपि शब्दं शुश्राव। तेन स प्रत्यासन्नं वनगजं मत्वा कृतहस्ततया शब्दानुसारेण निपातिनमिषुं विससर्ज। स खल्विषुः तमसाम्भसि कुम्भमापूरयतः कस्यचन द्विजेतरमुनिकुमारस्य हृदयं प्रविव्याध। "हा तात! हा अम्ब!!"—इति तारमाक्रन्दन् स कुमारः सद्यस्तटभुवि निपपात।

तमातस्वरमाकर्ण्य भयकम्पितमनाः शङ्काकुलो दशरथः समुपसृत्य वेतसकुञ्जमध्ये निपत्य मर्मवेधवेदनया करुणं विचेष्टमानं मुमूर्षुं मुनिकुमारमपश्यत्। "अहो बत !! महाननर्थ आपादितः अपरीक्षितकारित्वेन, पापिष्ठेन मया"--इति भृशं दुःखितो राजा तुरगादवतीर्य साश्रुनयनस्तं मुनिपुत्रम् अङ्के निधाय तस्यान्वयादिकं पप्रच्छ।

मुनिपुत्र उवाच--"पित्रोस्तपस्विनोः एकपुत्रोऽहं, अन्धयोर्मदेकावलम्बयोः शुश्रूषानिरतः जलाहरणार्थमिह आगतः। यदि मयि ते करुणा, नरपते ! नय मां मत्पित्रोः सकाशम्"--इति।

राजा सभयविषादं 'तथा' इत्यनुद्धृतशल्यमेव तं कुमारकं मुनिदम्पत्योः पादमूलं निनाय। आश्राव्य च निजनामान्वयादिकं, अज्ञानतः स्वेनाचरितमत्याहितं तयोः शशंस। अशनिपातमिव तं वृत्तान्तं श्रुत्वा तौ मुनिदम्पती शल्योद्धरणक्षण एवोत्क्रान्तजीवितं पुत्रकमाश्लिष्यन्तौ करुणं बहु विलप्य कृतापकारं नरनाथमशपतां--"त्वमप्यावामिव अन्त्ये वयसि पुत्रविरहशोकादवसानं गमिष्यसि"--इति। शप्त्वा च तौ मुनिदम्पती पुत्रमनु ज्वलनं प्रविविशतुः।

चिराददृष्टतनयाननस्य नरपतेः शापोऽप्येष पुत्रजन्म प्रसञ्जयन् उपक्रमेऽनुग्रहरूपो बभूव।

व्यपच्यत चैष शापो दशरथस्य कालान्तरे, येन स कैकेयीवचनाद्विवासितस्य रामस्य विश्लेषमसहमान एव जीवितं जहौ।

## शब्दार्थ

यौवनमददुर्ललितः=जवानी के मद से चंचलवृत्ति वाला। शरासनम्=धनुष। वराह=सूअर। गवयः=जंगल की गाय। खड्गः=गेंडा। हरिः=शेर। तरक्षुः=तरख। रुरुः=हिरन। शरव्यीकृतेषु=बाण का निशाना बने हुए। उषसि=प्रातः सूर्योदय से पूर्व। अन्वयः=वंश। मुमूर्षुः=मरनेवाला। पापिष्ठेन=बड़े पापी ने। अवसानम्=समाप्ति (मृत्यु)। विश्लेषम्=वियोग को। व्यपच्यत=पक गया।

## अभ्यास

(क) राजा दशरथ से मुनिकुमार पर बाण का प्रहार कैसे हुआ?

(ख) बाण लगने पर मुनिकुमार के माता-पिता ने दशरथ से क्या कहा

१—उषसि। अम्भसि। मुमूर्षुम्। पित्रोः। आश्लिष्यन्तौ। दम्पती—

ये किन शब्दों के किस विभक्ति तथा वचन के रूप हैं?

२—नामान्वयादिकम्। शापोस्त्येष। खल्विषुः—इनमें सन्धिच्छद करो।

३—जहौ। अशपताम्। गमिष्यामि। आचकांक्ष। अवाहयत्—ये किस धातु के किस पुरुष वचन के रूप हैं?

४—इस कथा से क्या शिक्षा प्राप्त होती है?

# विश्वामित्रोपाख्यानम्

आसीत् कान्यकुब्जनामनि नगरे क्षत्रियवंश-जातः गाधेः सुतः विश्वरथो नाम राजा। यः खलु विश्वामित्र-इति सार्थकनाम्ना पुनः विख्यातोऽभवत्।

स कदाचित् सान्तःपुरः ससैन्यः मृगयामटितुं वनाय वव्राज। स एकस्मिन् दिने सकलानि आयुधान्यादाय मृगयायै गहनं वनं प्रविवेश। तत्र सिंहान् व्याघ्रान् भल्लूकान् हरिणानन्यांश्च नानाविधान् वन्यमृगान् जघान। दीर्घकालं मृगयाटनेन अत्यन्तं परिश्रान्तो बभूव। भानुः नभसो मध्यगतः प्रचकाशे। विश्वरथो ललाटन्तपेन सूर्यातपेन तप्तोऽभूत्। शिबिरमतिदूरे स्थितम्। क्षुधया पिपासया च भृशं बाधितो बभूव। निर्मानुषेऽरण्ये इतस्ततः परिबभ्राम। अन्ततस्तस्य नातिदूरे वर्त्तमानं भगवतः वसिष्ठस्य महर्षेराश्रमस्थानं दृष्टिगोचरमभत्। तत्र गत्वा वसिष्ठं प्रणनाम। भगवान् वसिष्ठः क्षुत्पिपासाभ्यां परिश्रान्तमवगत्य स्वागतादिभिः उपचारैर्यथार्हम् अर्चयामास।

अत्रान्तरे तस्य सैनिकाः परिजनाश्च तमन्विष्यन्तः तदेवाश्रमस्थानमाजग्मुः। भगवान् वसिष्ठः ससैनिकस्य सपरिजनस्य तस्य राज्ञ आतिथ्यं कर्तुमियेष। तस्य पार्श्वे नन्दिनी नाम दिव्या धेनुरासीत्। सा चाश्चर्यशक्तियुक्ता बभूव। तां वसिष्ठः आतिथ्यस्य संविधानानि विधातुं नियुयोज। तस्याः प्रभावात् सर्वेषां सैनिकानां राज्ञश्च समग्रमातिथ्यं कृतम्।

एवंविधं नन्दिन्याः प्रभावं दृष्ट्वा विश्वरथो वसिष्ठमुपगम्य नन्दिनीं मह्यं देहि—इति ययाचे। वसिष्ठस्तु तां दातुं नाङ्गीचकार। विश्वरथः पुनः पुनः निर्बन्धमकरोत्। तेनोभयोः महती स्पर्धा जाता।

विश्वरथो बलात्कारेण नन्दिनीमपहर्तुं सैनिकानादिदेश। तैः बलादाकृष्यमाणा सा नन्दिनी क्रोधाविष्टा शरीरं विधुन्वाना हुम्भारवं चकार। तस्याः शरीरात् पुलिन्दाः शकाः यवनाः हूणाः म्लेच्छा इत्यादयः सैनिकाः शस्त्रपाणयो निर्जग्मुः। ते च नानाविधैः प्रहरणैः प्रहृत्य विश्वरथस्य योधान् विद्रावयामासुः। ते योधाः कान्दिशीका भूत्वा दिशि दिशि पलायाञ्चक्रिरे। विश्वरथः पुनरत्यन्तं कुपिततपःप्रभावसम्पादितानि बहून्यस्त्राणि

वसिष्ठस्योपरि प्रयुयोज। वसिष्ठस्तु स्वस्य तपस्सिद्धेः साधनं दण्डमेकमात्मनः पुरतो निचखान, विश्वरथेन प्रयुक्तानि सर्वाण्यस्त्राणि तेन दण्डेन भस्मसादक्रियन्त। अनन्तरमसौ विश्वरथो नितरां निर्विण्णः श्लोकमिमं पपाठ---

"धिग्बलं क्षत्रियबलं ब्रह्मतेजो बलं बलम्।
एकेन ब्रह्मदण्डेन सर्वास्त्राणि हतानि मे॥" इति।

अथ च तपोबलेन ब्राह्मण्यं सम्पादनीयमिति स निश्चिकाय। राज्यभारं पुत्रेषु निक्षिप्य वनं वव्राज। तत्र तीव्रतरं तपश्चचार। भूलोके मनुष्याः तपश्चरन्ति स्वर्गलोके च वसतां देवानां भयं जायते। किमिति? चेत् एते तपोमहिम्ना स्वर्गलोकं गच्छेयुस्तर्हि ते अस्माकमाराधनादीनि नैव कुर्युः-इति। तस्मात् मनुष्याणां च तपश्चरणं देवैर्विहन्यते।

तत्र प्रथमं त्रिशंकुं स्वर्गमारोपयितुं बहुना कालेन सम्पादितं तपोबलं नष्टमभूत्। अथ च शुनश्शेपाख्यस्य मुनिकुमारस्य प्राणसंरक्षणाय तपो विनियुक्तमासीत्। अनन्तरम् मेनकया सह सङ्गतेन महत्तपो नष्टमभूत्। ततश्च रम्भायाः शापदानेन महांस्तपोव्ययः समभूत्। एवं पदे पदे प्रतिहतेऽपि

तपसि विश्वरथोऽयं न विरराम। अन्ततः ब्रह्मर्षित्वं जितेन्द्रियत्वं चावाप्य तपसो विरराम। तदनन्तरमेवास्य 'विश्वामित्रः' इति नाम प्रसिद्धमभूत्।

## शब्दार्थ

सान्तःपुरः=रानियों सहित। मृगया=शिकार। प्रचकाशे=चमकने लगा। निर्मानुषे=मनुष्यों से रहित। आतिथ्यं=अतिथि-सेवा। शिविरम्=सेना का पड़ाव। ललाटन्तपः=माथा तपानेवाला। संविधानानि=सामग्रिया। निर्बन्धः=हठ। पुलिन्दः=भील। कान्दिशीकः=घबराहट में भागने की दिशा का जिसे ज्ञान नहीं।

## अभ्यास

(क) विश्वामित्र ने वशिष्ठ ऋषि से युद्ध क्यों किया?

(ख) विश्वरथ को विश्वामित्र क्यों कहा जाने लगा?

(ग) धिग्बलं......इत्यादि श्लोक किस प्रसंग में कहाँ गया है? और इसका क्या आशय है?

१—प्रचकाशे। प्रणनाम। अर्चयामास। बभ्राम। नियुयोज—इन पदों में धातु, लकार, पुरुष और वचन का निर्देश करो।

२—मृगया। नभस्। नन्दिनी। तेजस्। बहु—इनके पञ्चमी तथा सप्तमी के रूप लिखो।

३—मृगयाटनम्। विख्यातोऽभूत्। निर्मानुषेऽरण्ये—इनमें सन्धिच्छेद करो।

४—अद्, भ्रम्, दा, गम्—इनके तुमुन् तथा क्तवतु प्रत्यय में रूप लिखो।

---

# विद्यायाः बुद्धिरुत्तमा

वरं बुद्धिर्न सा विद्या विद्याया बुद्धिरुत्तमा ।
बुद्धिहीना विनश्यन्ति यथा ते सिंहकारकाः ॥

कस्मिंश्चिदधिष्ठाने चत्वारो ब्राह्मणपुत्राः परस्परं मित्रभावमुपगता वसन्ति स्म । तेषां त्रयः शास्त्रपारं गताः, परन्तु बुद्धिरहिताः । एकस्तु बुद्धिमान्, केवलं शास्त्रपराङ्मुखः । अथ तैः कदाचिन्मित्रैर्मन्त्रितम्--'को गुणो विद्यायाः, येन देशान्तरं गत्वा भूपतीन् परितोष्यार्थोपार्जना न क्रियते । तत्पूर्वदेशं गच्छामः ।' तथाऽनुष्ठिते किंचिन्मार्गं गत्वा तेषां ज्येष्ठतरः प्राह--'अहो अस्माकमेकश्चतुर्थो मूढः केवलं बुद्धिमान् । न च राजप्रतिग्रहो बुद्ध्या लभ्यते विद्यां विना । तन्नास्मै स्वोपार्जितं दास्यामि, तद् गच्छतु गृहम्' । ततो द्वितीयेनाभिहितम्--'भो सुबुद्धेः, गच्छ त्वं स्वगृहे, यतस्ते विद्या नास्ति ।' ततस्तृतीयेणाभिहितम्--'अहो, न युज्यत एवं कर्तुम् । यतो वयं बाल्यात्प्र-

भूत्येकत्र क्रीडिताः। तदागच्छतु महानुभावोऽस्मदुपार्जितवित्तस्य समभागी भविष्यतीति। उक्तं च--

अयं निजः परो वेति गणना लघुचेतसाम्।
उदारचरितानान्तु वसुधैव कुटुम्बकम् ॥

तद् आगच्छतु एषोऽपि'–इति। तथाऽनुष्ठिते तैः मार्गाश्रितैः अटव्यां कतिचिद् अस्थीनि दृष्टानि। ततश्च एकेन अभिहितम्--'अहो! अद्य विद्याप्रत्ययः क्रियते, कतिचिद् एतानि मृतसत्त्वस्य अस्थीनि तिष्ठन्ति, तद् विद्याप्रभावेण जीवनसहितं कुर्मः। अहम् अस्थिसञ्चयं करोमि।' ततश्च तेन औत्सुक्याद् अस्थिसंचयः कृतः। द्वितीयेन चर्ममांसरुधिरं संयोजितम्। तृतीयोऽपि यावज्जीवनं संचारयति, तावत्सुबुद्धिना निषिद्धः--'भोः, तिष्ठतु भवान्। एष सिंहो निष्पाद्यते। यद्येनं सजीवं करिष्यति ततः अयं सर्वानपि व्यापादयिष्यति'--इति तेनाभिहितः स आह--'धिङ्मूर्ख, नाहं विद्याया विफलतां करोमि।' ततस्तेनाभिहितम्–'तर्हि प्रतीक्षस्व क्षणं यावदहं वृक्षमारोहामि।' तथाऽनुष्ठिते यावत्सजीवः कृतः तावत्ते त्रयोऽपि सिंहेनोत्थाय व्यापादिताः। स च पुनर्वृक्षादवतीर्य गृहं गतः।

## शब्दार्थ

अधिष्ठाने=नगर में । परितोष्य=प्रसन्न करके । प्रतिग्रहः=दान (इनाम) । महानुभावः=बड़े प्रतापवाला । समभागी=समान हिस्सेदार । लघुचेतसाम्=हल्के दिलवालों की । अटव्याम्=जंगल में । प्रत्ययः=आजमायश । निष्पाद्यते=बनाया जा रहा है । प्रतीक्षस्व=ठहरो, इन्तजार करो । धिक्=(अव्यय) निन्दा के अर्थ में ।

## अभ्यास

(क) विद्या से बुद्धि क्यों उत्तम है ? विद्या-विहीन चौथा मित्र वृक्ष पर क्यों चढ़ा ?

(ख) इस कथा से क्या उपदेश मिलता है ?

१—नश् । गम् । तुष् । लभ् । विद् । कृ—इनके लोट् तथा लृट् लकार के रूप लिखो ।

२—अभिहितम् । उत्थाय । निषिद्धः । अवतीर्य—इनमें प्रकृति-प्रत्यय दिखाओ ।

३—अटवी । अस्थि । बुद्धि । बाल्य । समभागी—इनके द्वितीया विभक्ति में रूप लिखो ।

———

# भारतीय-परिवार-परिचयः

भारतवर्षे सर्वे कुटुम्बिनः सम्भूय निर्वहन्ति जीवनम् । यो वै सर्वेषु ज्येष्ठः स एव कुटुम्बस्य नेता, सर्वेषु व्यवहारेषु चाधिकृतः । स एवाखिलं परिवारं बिभर्ति, तस्य च योगक्षेमं वहति । सर्वे च परस्परं स्नेहेन व्यवहरन्ति, कनिष्ठाः ज्येष्ठान् आद्रियन्ते, ज्येष्ठाश्च कनिष्ठान् प्रेम्णा सम्वर्धयन्ति । पुरुषाः स्त्रियश्च स्वस्वकार्यं विभज्य रथस्य चक्रद्वयमिव स्नेहेन प्रचालयन्ति । उक्तं हि भगवता श्रीकृष्णेन—

'स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः'—इति।

एवं स्वकीयं कार्यभारं सोत्साहं वहतां कुटुम्बिनां समूहः सामूहिकः परिवारः कथ्यते । तत्र पिता माता सूनवो दुहितरश्च परिवारस्यावयवाः भवन्ति । पिता माता च पितरौ जनकौ वा भवतः । तयोः पुत्राः पुत्र्यश्च परस्परं भ्रातरो भगिन्यश्च भवन्ति । तेषु बहुषु सत्सु सर्वेभ्योऽग्रजातः ज्येष्ठः, ततः पश्चाल्लब्धजन्मानोऽनुजाः उच्यन्ते ।

पित्रोराज्ञापालनं, तयोः सन्तोषसम्पादनं सन्ततेः प्रथमो धर्मः । येन पितरौ सुखिनौ कुशलिनौ च

स्यातां तत्तस्याः प्रमुखं कार्यम्। भ्रातरो भगिन्यश्च मिथः प्रीतिं वर्धेरन्, अन्योन्यस्मिंश्च दयादाक्षिण्यशालिनो भवेयुः।

जनकस्य पिता पितामहः, माता च पितामही कथ्येते। तथा मातुः पिता मातामहः, मातुर्माता च मातामही भवतः। पितामहस्य जनकः प्रपितामहः, मातामहस्य तु प्रमातामहः, जननी च पितामहस्य प्रपितामही, मातामहस्य च प्रमातामही स्तः।

पितुर्भ्राता पितृव्यः, मातुर्भ्राता मातुलो भवति। पितृव्यस्य पत्नी पितृव्या, मातुलस्य पत्नी मातुलानी च कथ्यते। पितुर्भगिनी पितृव्या, मातुर्भगिनी मातृष्वसा। पितृष्वसुः तनयः पितृष्वसेयः, मातृष्वसुः पुत्रो मातृष्वसेयः। पितृव्यस्य पुत्रः पितृव्यजः, मातुलस्य सुतो मातुलजो भवति।

भगिन्या जातो भागिनेयः स्वस्रीयश्च, दुहितुः पुत्रः दौहित्रः। पुरुषेण परिणीता स्त्री पत्नी भार्या, दाराः, कलत्रं वा कथ्यते, स्त्रिया च परिणीत पुमान् पतिः भर्त्ता चोच्यते। भगिन्याः परिणेता आवुत्तः, दुहितुरुपयन्ता जामाता। पत्न्या भ्राता श्यालः, भगिनी च श्याली, पत्युः कनीयान् भ्राता देवा वा देवरः, ज्यायान् भ्राता ज्येष्ठश्चोच्यते। पत्युः

स्वसा च ननान्दा भवति। भ्रातुर्जाया प्रजावती, तत्पुत्रो भ्रात्रीयो भ्रातुष्पुत्रो वा। पुत्रस्य सूनुः पौत्रो नप्ता च, पुत्री पौत्री नप्त्री वा। पौत्र्याः पौत्रस्य वा पुत्रः पुत्री च क्रमशः प्रपौत्रः प्रपौत्री च भवतः। एकेन पुंसा ऊढाः अनेकाः स्त्रियः परस्परं सपत्न्यो भवन्ति। मातुः सपत्नी विमाता भवति, तत्तनूजो वैमात्रेयः। अपुत्रेण पुत्रवत्परिगृहीतो दत्तकः पुत्रः। पतिपत्न्योः पितरौ अन्योन्यस्य श्वश्रूः श्वशुरश्च जायेते। भ्रातृवृन्दस्य जायाः परस्परं यातरो भवन्ति। अमी सर्वे मिलित्वा त्रिविधा बान्धवाः—आत्मबन्धवः, पितृबन्धवः, मातृबन्धवश्च भवन्ति। एष भारतीयानां बन्धुवर्गः।

## शब्दार्थ

योगक्षेमम्=अपेक्षित वस्तु को प्राप्त करना, फिर उसकी देखभाल रखना। कनिष्ठः=छोटा। अभिरतः=लगा हुआ। पितृष्वसा=फूफी। यातरः=देवरानी। मातृष्वसा=मासी। पितृव्यः=चचा। स्वस्रीयः=भनेमा (भांजा)। मातामही=नानी।

## अभ्यास

१—संक्षेप में भारतीय परिवार का परिचय संस्कृत में दो।
मासी, मामी, जेठानी, भनेमा, फूफी—इनके लिये संस्कृत में कौन शब्द हैं।
२—सन्तति। मातुलानी। पुमस्। जामातृ—इनके चतुर्थी विभक्ति में रूप लिखो।

———

# महाराजदशरथस्य शोकः

(ततः प्रविशति सुमन्त्रः)

सुमन्त्रः—(सर्वतो विलोक्य सशोकम्)

एते भृत्याः स्वानि कर्माणि हित्वा
स्नेहाद् रामे जातबाष्पाकुलाक्षाः ।
चिन्तादीनाः शोकसंदग्धदेहा
विक्रोशन्तं पार्थिवं गर्हयन्ति ॥

(उपेत्य) जयतु महाराजः ।

राजा—भ्रातः ! सुमन्त्र ! क्व मे ज्येष्ठो रामः ?—
नहि, नहि युक्तमभिहितं मया ।

क्व ते ज्येष्ठो रामः प्रियसुत ! सुतः सा क्व दुहिता
विदेहानां भर्तुर्निरतिशयभक्तिर्गुरुजने ।
क्व वा सौमित्रिर्मां हतपितृकमासन्नमरणं,
किमप्याहुः किं ते सकलजनशोकार्णवकरम् ॥

सुमन्त्रः—महाराज ! मा मैवम् अमङ्गलवचनानि भाषिष्ठाः । अचिरादेव तान् द्रक्ष्यसि ।

राजा——सत्यम् अयुक्तमभिहितं मया । नायं तपस्विनामुचितः प्रश्नः । तत् कथ्यताम्——अपि तपस्विनां तपो वर्धते ? अप्यरण्यानि स्वाधीनानि विचरन्ती वैदेही न परिखिद्यते ?

सुमित्रा——सुमन्त्र ! बहुवल्कलालङ्कृतशरीरा बालाऽप्यबालचारित्रा भर्त्तुः सहधर्मचारिणी अस्मान् महाराजं च किञ्चिन्नालपति ?

सुमन्त्रः——सर्वं एव महाराजम्............... ।

राजा——न न । श्रोतरसायनैर्मम हृदयातुरौष-धैस्तेषां नामधेयैरेव श्रावय ।

सुमन्त्रः——यदाज्ञापयति महाराजः । आयुष्मान् रामः ।

राजा——राम इति । अयं रामः, तन्नामश्रवणात् स्पृष्ट इव मे प्रतिभाति । ततस्ततः ?

सुमन्त्रः——आयुष्मान् लक्ष्मणः ।

राजा——अयं लक्ष्मणः । ततस्ततः ?

सुमन्त्रः——आयुष्मती सीता जनकराजपुत्री ।

राजा——इयं वैदेही । रामो लक्ष्मणो वैदेही—इति अयमक्रमः ।

सुमन्त्रः——अथ कः क्रमः ?

राजा--रामो वैदेही लक्ष्मण इत्यभिधीयताम् ।
रामलक्ष्मणयोर्मध्ये तिष्ठत्वत्रापि मैथिली ।
बहुदोषाण्यरण्यानि सनाथैषा भविष्यति ॥

सुमन्त्रः--यदाज्ञापयति महाराजः । आयुष्मान् रामः ।

राजा--अयं रामः ।

सुमन्त्रः--आयुष्मती जनकराजपुत्री ।

राजा--इयं वैदेही ।

सुमन्त्रः--आयुष्मान् लक्ष्मणः ।

राजा--अयं लक्ष्मणः । राम ! वैदेहि ! लक्ष्मण ! परिष्वजध्वं मां पुत्रकाः !

सुमन्त्रः--शृङ्गवेरपुरे रथादवतीर्याऽयोध्याभिमुखाः स्थित्वा सर्व एव महाराजं शिरसा प्रणम्य विज्ञापयितुमारब्धाः ।

कमप्यर्थं चिरं ध्यात्वा वक्तुं प्रस्फुरिताधराः ।
बाष्पस्तम्भितकण्ठत्वादनुक्त्वैव वनं गताः ॥

राजा--कथमनुक्त्वैव वनं गताः ।

(इति द्विगुणं मोहमुपगतः)

सुमन्त्रः--(ससम्भ्रमम्) बालाके ! उच्यताम-मात्येभ्यः, अप्रतीकारायां दशायां वर्तते महाराजः-इति ।

कञ्चुकीयः---तथा (निष्क्रान्तः) ।

देव्यौ--महाराज ! समाश्वसिहि समाश्वसिहि ।

राजा-(किञ्चित् समाश्वस्य)

अङ्गं मे स्पृश कौसल्ये ! न त्वां पश्यामि चक्षुषा ।
रामं प्रति गता बुद्धिरद्यापि न निवर्त्तते ।

पुत्र ! राम ! यत् खलु मया संततं चिन्तितम्-
राज्ये त्वामभिषिच्य, सन्नरपतेर्लाभात् कृतार्थाः प्रजाः
कृत्वा, त्वत्सहजान् समानविभवान् कुर्वात्मनः सन्ततम् ।
इत्यादिश्य च ते, तपोवनमितो गन्तव्यमित्येतया
कैकेय्या हि तदन्यथा कृतमहो निःशेषमेकक्षणे ॥

सुमन्त्र ! उच्यतां कैकेय्याः,
गतो रामः, प्रियं तेऽस्तु, त्यक्तोऽहमपि जीवितैः ।
क्षिप्रमानीयतां पुत्रः पापं सफलमस्त्विति ।

सुमन्त्रः-यदाज्ञापयति महाराजः ।

राजा--(ऊर्ध्वमवलोक्य) अये रामकथाश्रवण-सन्दग्धहृदयं मामाश्वासयितुमागताः पितरः । कोऽत्र ?

(प्रविश्य)

कञ्चुकीयः–जयतु महाराजः ।

राजा––आपस्तावत् ।

कञ्चुकीयः–यदाज्ञापयति महाराजः । (निष्क्रम्य, प्रविश्य) जयतु महाराजः । इमा आपः ।

राजा––(आचम्याऽवलोक्य)

अयममरपतेः सखा दिलीपो
रघुरयमत्रभवानजः पिता मे ।
किमभिगमनकारणं भवद्भिः
सह वसने समयो ममापि तत्र ॥

राम ! वैदेही ! लक्ष्मण ! अहमितः पितॄणां सकाशं गच्छामि ।

हे पितरः, अयमहमागच्छामि । (मूर्च्छया परामृष्टः) (कञ्चुकीयो यवनिकास्तरणं करोति)

सर्वे–हा हा महाराजः ! हा हा महाराजः !!

(निष्क्रान्ताः सर्वे)

## शब्दार्थ

हित्वा=त्यागकर। विक्रोशन्तम्=चिल्लाते हुए। युक्तम्=उचित। अर्णवः=समुद्र। वल्कलम्=वृक्ष की छाल। रसायनम्=मृत्यु तथा बुढ़ापे को हटाने वाली वस्तु। सकृत्=एक बार। स्तम्भितः=रुका

हुआ। कृतार्थाः =सफल। सहजान् =भाई-बहनों को। निःशेषम् =समान। परामृष्टः =पकड़ा हुआ।

## अभ्यास

(क) राजा दशरथ की मूर्छा का वर्णन करो।

(क) एते भृत्याः—इत्यादि पद्य का अर्थ अपनी भाषा में लिखो।

१—स्वानि। विक्रोशन्तम्। तपस्विनाम्। कैकेय्याः—इनके विभक्ति तथा वचन बताओ।

२—आत्मन्। मति। चक्षुष्। आयुष्मती। आयुष्। आपः—इनके पञ्चमी विभक्ति में रूप लिखो।

३—निम्नलिखित शब्दों में सविग्रह समास दिखाओ—
समानविभवान्। कथाश्रवणसन्दग्धहृदयम्। सन्नरपतिः। चिन्तादीनाः।

४—आयुष्मती। परामृष्टः। आश्वासयितुम्। प्रणम्य। गन्तव्यम्—इनमें प्रकृति-प्रत्यय दिखाओ।

---

# तपस्याप्रभावः

एवमेवानुश्रूयते—

पुरा किल शङ्ख-लिखितनामकौ परमतपस्विनौ द्वौ भ्रातरौ चास्ताम् । तौ सततवाहिनीनद्यास्तटे पृथक् पृथगाश्रमौ निर्माय परमेश्वरस्य ध्यानं विदधाते ।

अथैकदा लिखितः स्वज्येष्ठभ्रातरं शंखं द्रष्टुकामस्तदाश्रमं समाययौ । परं शङ्खस्तदा स्वाश्रमे नासीत्, क्वचिद् गतवानासीत् । लिखितोऽपि तदागमनं प्रतीक्षमाणः क्षुधया तदाश्रमवृक्षात् फलमेकं गृहीत्वा यावदेव भक्षयितुमिच्छति तावदेव शङ्खोऽपि कुतश्चित् स्वाश्रमं समागतः । तत्र च स्वकनिष्ठभ्रातरं लिखितं दृष्ट्वा स परमहर्षप्रकर्षमन्वभवत् । किन्तु, तस्य हस्ते फलमेकं निरीक्ष्य तं प्रत्यवादीत्—"भो लिखित ! फलमिदं कुतः समासादितम् ?"

लिखित उवाच—"भ्रातः ! भवत एवाश्रमवृक्षाद् गृहीतम् ।" रोषेणाभिभूतः शंखस्तं प्रत्युवाच—"भोः ! यदि कश्चित् कस्यचिद्वस्तु तमपृष्ट्वैव गृह्णीयात् तर्हि तस्य तत्कार्यं किमभिधास्यते ?"

लिखित उवाच—"स्तेयमेव तदुच्यते।"

शङ्खः प्राह—"यदि कश्चित् स्तेयं कुर्यात् तर्हि तेन किं विधेयम् ?"

लिखित उवाच—"स राजान्तिकं गत्वा स्वापराधं कथयत्। पश्चात्तस्य निर्धारितं दण्डं सहर्षं स्वीकुर्यात्। एवमनुष्ठानेनैव स तत्पापकर्मणः शुद्धिमर्हति। अन्यथा तु तस्मिन्नुपरते यमदूतास्तं नरकं नयन्ति, बहु पीडयन्ति च।"

शङ्ख उवाच-"बाढम् त्वमपि मामपृष्ट्वैव ममाश्रमवृक्षात् फलमपहृत्य स्तेयं व्यदधाः। अतस्त्वमाशु राजसदो गत्वा, स्वापराधस्य दण्डं वृणीष्वेति।

एवं समादिष्टोऽसौ राजसदनं गतः। सुद्युम्ननामा राजाऽपि तं समभ्यर्च्य पप्रच्छ-"भगवन् ! कथय कथमत्र समागतः ? वः किं प्रियं करवाणि ?"-इति।

लिखित उवाच—"राजन् ! मया स्वभ्रातु शंखस्याश्रमवृक्षात् फलमपहृत्य स्तेयमकारि। भवान् मां दण्डयतु।"

राजोवाच-"भगवन्! त्वामहं क्षमे। आप्तः किल भवान् कथन्नु दण्डमर्हति ?"

लिखित उवाच-"राजन्! नाहं क्षमार्थमत्र समायातः। किन्तु स्वभ्रातुः शंखस्यादेशेन दण्डमाप्तुमेवात्र समागतोऽस्मि। अतः--'मा गृधः कस्य स्विद्धनम्' इति श्रुतिविरुद्धेन तदाचरणेन पापानुषङ्गिणं शाधि मां दण्डप्रदानेन। मा चिरय।"

एवं लिखितः स्वात्मशुद्धये यदा पुनः पुनः दण्डमेव प्रार्थयामास तदा राजाज्ञया कश्चिद् बधिकः तस्य करौ चिच्छेद। यतः स्तेयकर्मणस्तदाऽयमेव दण्डो नियत आसीत्।

एवं हस्तयोः प्रच्छिन्नत्वेऽपि स दुःखितो नाऽभूत्। किन्तु दण्डग्रहणेन प्रसन्नस्तस्याश्रमं पुनरेत्य प्रोवाच--"भ्रातः! स्वीकृतदण्डः समागतोऽस्मि"-इति।

शङ्खोऽपि प्रच्छिन्नहस्तं तमवलोक्य स्नेहेन समालिङ्ग्य चाब्रवीत्- "लिखित! एहि, सैतवाहिन्यां स्नात्वा देवर्षीन् तर्पयावः।"

एवं तदाज्ञया लिखितः सैतवाहिन्यां स्नात्वा यदा तर्पयितुं छिन्नहस्तो जले प्रविवेश तदा तत्क्षण-मेव तस्य बाहू पूर्ववज्जातौ । तदा विस्मितो लिखित एवम् अचिन्तयत्––किमियं सैतवाहिन्येव बाहुदा जाता ? आहोस्विद् दैवमेवात्र कारणम् ? नहि नहि भ्रातुः शङ्खस्य तपःप्रभावेणैवेदं सर्वं जातम्––इति विचिन्त्य तमाह–"भ्रातः ! यद्येवमेव करणीय-मासीत् तर्हि किमर्थं मां राजसदनं सम्प्रेषितवान्, पूर्वमेव भवता कथं नाहं विधूतपापो विहितः ?"

शङ्ख उवाच–"भो ! दण्डप्रदानेनानुशासनम् राज्ञ एवाधिकारोऽस्ति । यतो राजनियमानृषयो रचयेयुः, राजा तु प्रजया तेषां पालनमेव कारयेत्-इत्यस्ति नियमः । अतो नान्यः कश्चित् दण्डयितु-मर्हः । दण्डयति चेत्तर्हि स पापीयाञ्जायते । परं क्षमापनं तु सार्वजनिकं सर्वदैव श्रेष्ठमस्ति । अतस्त-वैव श्रेयसे मया सर्वमेतदनुष्ठितम् ।"

एवं क्षमापन्नो लिखितः प्रशंसंस्तपःप्रभावं स्वाश्रममुपययौ ।

## शब्दार्थ

**निर्माय** =बनाकर। **द्रष्टुकामः**=देखने की इच्छा वाला। **हर्ष-प्रकर्षम्**=बड़ी प्रसन्नता को। **बाढम्**=बहुत अच्छा (अव्यय)। **पापानुषङ्गिणम्** =पाप कर्म में लगे हुए। **विधूतपापः**=जिसके पाप दूर कर दिये हों। **आप्तः**=विश्वास तथा श्रद्धा के योग्य। **क्षमापनम्**=क्षमा कराना।

## अभ्यास

(क) इस कथा से क्या शिक्षा मिलती है ?

(ख) कटे हाथों वाले लिखित ने पुनः हाथ कैसे प्राप्त किये ?

१—अवादीत्। उच्यते। कुर्यात्। कथयेत्। अर्हति। अब्रवीत्—ये किस धातु, लकार, पुरुष तथा वचन के रूप हैं

२—सातवाहिन्येव। स्वात्मशुद्धये। प्रशंसंस्तपःप्रभावम्—इनमें सन्धि-छेद करो।

३—आहोस्वित्। चेत्। किल। अर्हः। एवम्—इन शब्दों का वाक्य में प्रयोग करते हुए अर्थ स्पष्ट करो।

४—'मा गृधः कस्य स्विद् धनम्'—इसका विस्तार से अर्थ लिखो।

---

# कृपणकथा

न ददाति न चाश्नाति धनं रक्षति जीववत् ।
प्रातरस्मरणीयत्वात् कृपणः कस्य नाप्रियः ? ।।

आसीन्मथुरायां गूढधनो नाम वैश्यः । स च कालान्तरे वाणिज्यादिभिर्वर्तुलीकृतवित्तः परमकृपणो बभूव । एकदा तु दुर्भिक्षे प्रत्यासन्ने चिन्तितवान्- 'यदस्मिन् दुर्भिक्षे मम वित्तानि पुत्रकलत्रादिभिः खादयितव्यानि, मया च धनशोकेन मर्त्तव्यम् । तन्न भद्रम् । यतः--

एकाकी पुरुषः श्रीमान् धनं तस्य परं सुहृत् ।
अन्ये च सुहृदः सर्वे धनमूलं कुटुम्बकम् ।।

तदानागतावेक्षां करोमि । परालक्ष्यस्थाने वित्तानि धारयामि'--इति विमृश्य तथा कृतवान् । ततो दुर्भिक्षे स परिवारान् सर्वानन्नेन विना म्रियमाणान् पश्यन्नपि कस्मैचित् किमपि न ददौ । किञ्च परिवारैः कण्ठगतप्राणैर्याच्यमान इदं पद्यं पपाठ--

कृपणस्य धनं प्राणाः प्रार्थयद्भिश्च तन्मम ।
प्राणाः किं नैव गृह्यन्ते यतो न स्युर्धने शुचः ॥

ततस्तस्य पुत्रकलत्रादयः सर्वे विनान्नेनैव मृताः । स्वयं च प्राणमात्रावशेषः परामृष्टवान्—

यन्न पुत्रकलत्रेभ्यो दत्तं वित्तं मयार्जितम् ।
तन्निजप्राणरक्षार्थं कथं भोक्ष्ये निराकुलः ? ॥

ततः स्वप्राणरक्षार्थं अपि न वित्तं विनियुङ्क्ते । उपवासेन दिनानि गमयन्तं तमतिदुर्बलं दृष्ट्वा तन्नगरवासिनः कारुणिकाः पुरुषाः कतिचित् प्रोचुः—हे कृपण ! किं करिष्यसि तेन धनेन ? विद्यमानेऽपि धने निजप्राणान्नश्यतः अनुमन्यसे । अथवोचितमेवैतत् । यतः—

अर्जने लभते खेदं गते शोकं च विन्दति ।
नाप्नोति कृपणो वित्ते दानभोगभवं सुखम् ॥

अपि च—

दीयते न यदुत्साहाद् भुज्यते यन्न कामतः ।
तद्धनं ह्यतिदुःखार्थं खेदार्थं चापि चिन्वतः ।

गूढधन उवाच—'अयि नगरवासिनः पुरुषाः !

किमपि कुरुत। मया प्राणव्ययेनापि धनव्ययो न स्वीक्रियते।' ते ऊचुः—'तर्हि राज्ञा चौरेण वा गृहीतव्यं त्वयि विपन्ने तद्धनम्।' गूढधन उवाच—'अन्यस्यैव बुद्धिविहीनस्य धनमन्ये गृह्णन्ति। मया स्वकीयधनं गले बद्ध्वा मर्त्तव्यम्।' इत्यभिधाय धनपोटलिकां गृहीत्वा समुद्रतटं जगाम! तत्र कञ्चिन्नाविकं धीवरमुपगम्याह—'भ्रातर्नाविक! अमी दुस्त्यजा मम प्राणाः त्यक्तुकामेनापि मया न त्यक्तुं शक्यन्ते। ततस्त्वं परिवारशोकाकुलं मां समुद्रे मज्जयित्वा मारय। तद्वेतनत्वेन तुभ्यमेकं सुवर्णखण्डं दास्यामि।'

नाविक उवाच—'तर्हि देहि मे सुवर्णखण्डम्।' ततः सुवर्णानि प्रकाश्य दित्सया ददर्श। दृष्ट्वा च पुनरब्रवीत्—'भ्रातर्नाविक! सुवर्णानि दाहविशुद्धानि परस्मै दातुमशक्यानि तत्पुण्यार्थमेव मां मारय।' नाविकः तानि सुवर्णानि दृष्ट्वा इष्टधनलोभस्तमुवाच—'मा दास्यसि सुवर्णखण्डम्, पुण्यार्थमेव मारयिष्यामि।'

इत्यभिधायानन्तरं तं जले मज्जयित्वा सुवर्णानि गृहीत्वा नाविकः कृतार्थो बभूव।

जनयति हृदि खेदं मङ्गलं न प्रसूते
परिहरति यशांसि ग्लानिमाविष्करोति ।
उपकृतिरहितानां सर्वभोगच्युतानां
कृपणकरगतानां संपदां दुर्विपाकः ॥

## शब्दार्थ

**अश्नाति** = खाता है। **प्रातरस्मरणीयत्वात्** = प्रातःकाल में न स्मरण करने योग्य होने से। **वर्तुलीकृतम्** =इकट्ठा किया हुआ। **अनागतावेक्षाम्** = **अनागतस्य** = भविष्य की। **अवेक्षा**=विचार। **अलक्ष्यस्थाने**=जो स्थान जाना न जा सके। **शुचः**=शोक। **विनियुंक्ते**= लगाता है। **दुर्विपाकः**=दुष्ट परिणाम।

## अभ्यास

(क) गूढधन कैसे और क्यों मरा ?
(ख) उसका धन कहां गया ?
(ग) इस कथा से व्यावहारिक जीवन के विषय में क्या शिक्षा मिलती है ?

१--एकाकिन्। श्रीमत्। सुहृद्। कलत्र। संपत्--इन शब्दों के द्वितीया विभक्ति के रूप लिखो।
२--वच्। दा। आप्। दृश्। मन्--इन धातुओं के लृट् तथा लङ् लकार के रूपों का उच्चारण करो।
३--दाह-विशुद्धानि। इष्टधनलोभः। सर्वभोगच्युतानाम्। प्राणमात्रावशेषः। परमकृपणः--इनमें सविग्रह समास दिखाओ।
४--पठ्। याच्। ग्रह्। युज्--इन धातुओं के तुमुन् क्तवत् और क्त प्रत्ययान्त रूप लिखो।

-----

# कपटमित्रम्

अस्ति मगधदेशे चम्पकवती नामारण्यानी। तस्यां चिरान्महता स्नेहेन मृगकाकौ निवसतः। स च मृगः स्वेच्छया भ्राम्यन् हृष्टपुष्टाङ्गः केनचित् शृगालेनावलोकितः। तं दृष्ट्वा शृगालोऽचिन्तयत्-आः कथमेतन्मांसं सुललितं भक्षयामि। भवतु, विश्वासं तावदुत्पादयामि।

इत्यालोच्य उपसृत्याब्रवीत्---मित्र ! कुशलं ते ? मृगेणोक्तम्-कस्त्वम् ? स ब्रूते-क्षुद्रबुद्धि-नामा जम्बुकोऽहम्। अत्रारण्ये बन्धुहीनो मृत्तवन्नि-वसामि। इदानीं त्वां मित्रमासाद्य पुनः सबन्धुः जीवलोकं प्रविष्टोऽस्मि। अधुना तवानुचरेण मया सर्वथा भवितव्यम्। मृगेणोक्तम्-एवमस्तु।

ततः पश्चादस्तं गते सवितरि भगवति मरीचि-मालिनि तौ मृगस्य वासभूमिं गतौ। तत्र चम्पक-वृक्षशाखायां सुबुद्धिनामा काको मृगस्य चिरमित्रं निवसति। तौ दृष्ट्वा काकोऽवदत्-सखे चित्राङ्ग !

कोऽयं द्वितीयः। मृगो ब्रूते--जम्बुकोऽयम्, अस्मत्सख्यमिच्छन्नागतः। काको ब्रूते--मित्र! अकस्माद् अज्ञातकुलशीलेन आगन्तुना सह मैत्री न युक्ता।

इत्याकर्ण्य स जम्बुकः सकोपमाह--मृगस्य प्रथमदर्शनदिने भवानपि अज्ञातकुलशील एव। तत् कथं भवता सह एतस्य स्नेहानुवृत्तिरुत्तरोत्तरं वर्धते?

अयं निजः परो वेति गणना लघुचेतसाम्।
उदारचरितानां तु वसुधैव कुटुम्बकम्॥

यथायं मृगो मम बन्धुः तथा भवानपि। मृगोऽब्रवीत्--किमनेनोत्तरोत्तरेण। सर्वैरेकत्र विश्रम्भालापैः सुखिभिः स्थीयताम्।

यतः--

न कश्चित् कस्यचिन्मित्रं न कश्चित् कस्यचिद्रिपुः।
व्यवहारेण मित्राणि जायन्ते रिपवस्तथा॥

काकेनोक्तम्--एवमस्तु। अथ प्रातः सर्वे यथाभिमतदेशं गताः।

एकदा निभृतं शृगालो ब्रूते-सखे, अस्मिन् वनैकदेशे सस्यपूर्णं क्षेत्रमस्ति। तदहं त्वां नीत्वा दर्शयामि।

तथा कृते सति स मृगः प्रत्यहं तत्र गत्वा सस्यं खादति। अथ क्षेत्रपतिना तद् दृष्ट्वा पाशो नियोजितः। अनन्तरं पुनरागतो मृगः पाशैर्बद्धः अचिन्तयत् 'को मामितः कालपाशादिव व्याधपाशात् त्रातुं मित्रादन्यः समर्थः ?" तत्रान्तरे जम्बुकः तत्रागत्य उपस्थितोऽचिन्तयत्–फलिता तावदस्माकं कपटप्रबन्धेन मनोरथसिद्धिः। एतस्योत्कृत्यमानस्य मांसासृग्लिप्तानि अस्थीनि मयावश्यं प्राप्तव्यानि। तानि बाहुल्येन भोजनानि भविष्यन्ति। मृगः तं दृष्ट्वा उल्लसितो ब्रूते–सखे ! छिन्धि तावन्मम बन्धनम्। सत्वरं त्रायस्व माम्। यतः––

आपत्सु मित्रं जानीयाद्, युद्धे शूरमृणे शुचिम्।
भार्यां क्षीणेषु वित्तेषु, व्यसनेषु च बान्धवान्॥

अपरं च––

उत्सवे व्यसने चैव दुर्भिक्षे राष्ट्रविप्लवे।
राजद्वारे श्मशाने च यस्तिष्ठति स बान्धवः॥

जम्बुको मुहुर्मुहुः पाशं विलोक्याचिन्तयत्–दृढस्तावदयं बन्धः। ब्रूते च––'सखे, स्नायुनिर्मिता एते पाशाः, तदद्य भट्टारकवारे कथमेतान् दन्तैः स्पृशामि ? मित्र, यदि चित्ते नान्यथा मन्यसे तदा

प्रभाते यत् त्वया वक्तव्यं तत् कर्तव्यम्'–इत्युक्त्वा तत्समीपे आत्मनमाच्छाद्य स्थितः। अनन्तरं स काकः प्रदोषकाले मृगम् अनागतमवलोक्य इतस्ततः अन्विष्य तथाविधं दृष्ट्वोवाच–सखे, किमेतत् ? मृगेणोक्तम्––अवधीरित सुहृद्वाक्यस्य फलमेतत्। तथा चोक्तम्––

सुहृदां हितकामानां यः शृणोति न भाषितम्।
विपत् सन्निहिता तस्य, स नरः शत्रुनन्दनः॥

काको ब्रूते–स वञ्चकः क्वास्ते ? मृगेणोक्तम्–मन्मांसार्थी तिष्ठत्यत्रैव।

ततः काको दीर्घं निःश्वस्य प्राह–अरे वञ्चक, किमिदं त्वया पापकर्मणा कृतम् ? अथवा सत्यमुच्यते–

दुर्जनेन समं सख्यं प्रीतिं चापि न कारयेत्।
उष्णो दहति चाङ्गारः शीतः कृष्णायते करम्॥
दुर्जनः प्रियवादी च नैतद् विश्वासकारणम्।
मधु तिष्ठति जिह्वाग्रे हृदि हालाहलं विषम्॥

अथ प्रभाते क्षेत्रपतिर्लगुडहस्तः तं प्रदेशमागच्छन् काकेनावलोकितः। तमालोक्य काकेनोक्तम्–सखे ! मृग ! त्वमात्मानं मृतवत् संदर्श्य वातेनोदरं पूर-

यित्वा पादान् स्तब्धीकृत्य तिष्ठ। यदाहं शब्दं करोमि तदा त्वमुत्थाय सत्वरं पलायिष्यसे। मृगस्तथैव काकवचनेन स्थितः। ततः क्षेत्रपतिना हर्षोत्फुल्ललोचनेन तथाविधो मृग आलोकितः। आः! स्वयं मृतोऽसि—इत्युक्त्वा मृगं बन्धनान्मोचयित्वा पाशान् ग्रहीतुं सयत्नो बभूव। ततः काकशब्दं श्रुत्वा मृगः सत्वरमुत्थाय पलायितः। तमुद्दिश्य तेन क्षेत्रपतिना क्षिप्तेन लगुडेन शृगालो हतः। तथा चोक्तम्—

त्रिभिर्वर्षैस्त्रिभिर्मासैस्त्रिभिः पक्षैस्त्रिभिर्दिनैः।
अत्युत्कटैः पापपुण्यैरिहैव फलमश्नुते॥

## शब्दार्थ

**अरण्यानी**=बड़ा जंगल। **भ्राम्यन्**=घूमता हुआ। **मरीचिमाली**=किरणों की माला रखने वाला (सूर्य)। **सख्यम्**=मित्रता। **लघुचेताः**=हलके दिल वाला। **सस्यं**=खेती (फसल)। **असृक्**=खून। **स्नायुः**=नाड़ी। **अवधीरितम्**=जिस पर ध्यान नहीं दिया गया। **शत्रुनन्दनः**=दुश्मनों को खुशी देनेवाला। **हालाहलम्**=मार डालनेवाला ज़हर।

## अभ्यास

(क) शृगाल ने मृग को कैसे बन्धन में डाला ?
(ख) काक ने किस उपाय से उसे मुक्त किया ?

(ग) कथा का सारांश तथा इससे प्राप्त शिक्षा का निर्देश करो।

१—केनचित्+शृगालन। इति+आलोच्य+उपसृत्य+अब्रवीत्। इच्छत+आगतः। उत्+लसितम्—इनमें सन्धि करो।

२—मृगकाकौ। क्षुद्रबुद्धिनामा। अज्ञातकुलशीलेन। मांसासृग्लिप्तान्यस्थीनि। अवधीरित-सुहृद्वाक्येन—इनमें सविग्रह समास लिखो।

३—अस्थि। मरीचिमाली। सुहृत्। लघुचेतस्—इनके प्रथमा तथा तृतीया के रूप लिखो।

४—दुर्जनेन समम्........इत्यादि पद्य का सविस्तार अर्थ लिखो।

———

# चत्वारो मूर्खपण्डिताः

अपि शास्त्रेषु कुशला लोकाचारविवर्जिताः ।
सर्वे ते हास्यतां यान्ति यथा ते मूर्खपण्डिताः ।।

कस्मिंश्चिदधिष्ठाने चत्वारो ब्राह्मणाः परस्परं मित्रत्वमापन्ना वसन्ति स्म । बालभावे तेषां मतिरजायत—'यद् देशान्तरं गत्वा विद्याया उपार्जनं क्रियते' --इति । अथान्यस्मिन् दिवसे ते ब्राह्मणाः परस्परं निश्चयं कृत्वा विद्योपार्जनार्थं कान्यकुब्जं गताः । तत्र च विद्यामठे गत्वा पठन्ति । एवं द्वादशाब्दान् यावदेकचित्ततया विद्याकुशलास्ते सर्वे संजाताः । ततस्तैश्चतुर्भिः मिलित्वोक्तम्--'वयं सर्व-विद्यापारं गताः, तद् उपाध्यायमुत्कलापयित्वा स्वदेशे गच्छामः' -एवं मन्त्रयित्वा ब्राह्मणा उपाध्यायमुत्कलापयित्वा अनुज्ञां लब्ध्वा च पुस्तकानि नीत्वा प्रचलिताः । यावत् किंचिन्मार्गं यान्ति तावद् द्वौ पन्थानौ समायातौ दृष्ट्वोपविष्टाः सर्वे ।

तत्रैकः प्रोवाच--केन मार्गेण गच्छामः ?

एतस्मिन्समये तस्मिन्पत्तने कश्चिद् वणिक्पुत्रो मृतः। तस्य दाहार्थं महाजनो गतोऽभूत्। ततश्चतुर्णां मध्यादेकेन पुस्तकेऽवलोकितम्––महाजनो येन गतः स पन्थाः’––इति। ततस्तेनाभिहितं ‘तन्महाजन-मार्गेण गच्छामः’––इति।

अथ ते पण्डिता यावन्महाजनमेलापकेन सह यान्ति तावद्रासभः कश्चित्तत्र श्मशाने दृष्टः। अथ द्वितीयेन पुस्तकमुद्घाट्यावलोकितम्। उक्तं च––

उत्सवे व्यसने प्राप्ते दुर्भिक्षे शत्रुसंकटे।
राजद्वारे श्मशाने च यस्तिष्ठति स बान्धवः॥–इति।

तदहो! अस्मदीयो बान्धवः।’ ततः कश्चित्तस्य ग्रीवायां लगति, कोऽपि पादौ प्रक्षालयति।

अथ तैः पण्डितैर्दिशामवलोकनं कुर्वद्भिरेव कश्चिदुष्ट्रो द्रुतं गच्छन् दृष्टः। तैश्चोक्तम् एत-त्किम्! ततस्तृतीयेन पुस्तकमुद्घाट्योक्तम्–‘धर्मस्य त्वरिता गतिः’––इति, तन्नूनमेष धर्मः साक्षात्। चतुर्थेनोक्तम्–‘इष्टं धर्मेण योजयेत्’ इति, तद् बान्धवोऽयमस्माकं धर्मेण नियुज्यताम्॥ अथ तैः रासभः उष्ट्रग्रीवायां बद्धः। तत्तु केनचित् तत्स्वा-मिनो रजकस्याग्रे कथितम्। श्रुत्वा चासौ रजकस्तेषां

मूर्खपण्डितानां प्रहारकरणाय समायातः। दृष्ट्वा च तं दूरत एव ते प्रनष्टाः।

ततः स्तोकं पन्थानमतिक्रम्य प्रधावद्भिस्तैः काचिन्नदी समासादिता। तस्या जलमध्ये पलाशपत्रमायातं दृष्ट्वा पण्डितेनैकेनोक्तम्——'आगमिष्यति यत्पत्रं तदस्मांस्तारयिष्यति'——इति। एतत् कथयित्वा तत्पत्रस्योपरि पतितो यावन्नद्या नीयते तावत्तं नीयमानमवलोक्यान्येन पण्डितेन केशान्तं गृहीत्वोक्तम्——

सर्वनाशे समुत्पन्ने अर्धं त्यजति पण्डितः।
अर्धेन कुरुते कार्यं सर्वनाशो हि दुःसहः॥

——इत्युक्त्वा तस्य शिरश्छेदो विहितः॥

अथ तैः पश्चाद् गत्वा कश्चिद् ग्राम आसादितः। ग्रामीणैर्निमन्त्रिताश्च पृथक् पृथक् गृहेषु नीताः। तत एकस्य सूत्रिका घृतखण्डसंयुक्ता भोजने दत्ता। दृष्ट्वा च तां विचिन्त्य पण्डितेनोक्तं यत्——'दीर्घसूत्री विनश्यति'——इति। एवमुक्त्वा भोजनं परित्यज्य गतः। तथा द्वितीयस्य मण्डकाः दत्ताः। तेनाप्युक्तम्-'अतिविस्तारविस्तीर्णं तद् भवेन्न चिरायुषम्'-

इति। भोजनं त्यक्त्वा गतः। अथ तृतीयस्य वटिकाभोजनं दत्तम्। तत्रापि पण्डितेनोक्तम्--'छिद्रेष्वनर्था बहुलीभवन्ति'-एवं ते त्रयोऽपि पण्डिताः क्षुत्क्षामकण्ठाः लोकैर्हास्यमानाः ततः स्थानात् स्वदेशं प्रत्यागतः।

ततः साधु इदमुच्यते--

'अपि शास्त्रेषु कुशला' इत्यादि।

## शब्दार्थ

उपार्जनम्=ग्रहण। अब्दः=साल। उत्कलापयित्वा=प्रसन्न करके। अनुज्ञा=अनुमति। व्यसने=विपत्ति में। त्वरिता=शीघ्र। स्तोकम्=थोड़ा। नीयमानम्=बहाये जा रहे को। सत्रिका=सिमई। घृतखण्डसंयुक्ता=घी तथा शक्कर से युक्त। दीर्घसूत्री=ढीला, धीरे धीरे काम करने वाला, (कोई वस्तु, जिसक लंबे लंबे सूत हों)। छिद्रम्=छेद (दोष)। क्षुत्क्षामकण्ठाः=भूख से सूखे गले वाले।

## अभ्यास

(क) मूर्ख पण्डितों ने 'रासभ' तथा 'उष्ट्र' आदि को 'इष्ट' तथा 'धर्म' आदि के रूप में क्यों माना?

(ख) ये लोग पढ़े-लिख भी इस तरह का व्यवहार क्यों करने लगे?

(ग) कथा से क्या शिक्षा प्राप्त होती हैं?

१—लोकाचारविवर्जिताः। विद्योपार्जनम्। घृतखण्डसंयुक्ता। अति-विस्तारविस्तीर्णम्। क्षत्क्षामकण्ठाः—इनमें विग्रह दिखाकर समास का नाम लिखो।

२—हास्यमानः। पतितः। नीयमानः। संयुक्तः। हास्यता। लब्ध्वा—इनमें प्रकृति-प्रत्यय दिखाओ।

३—पुस्तकेऽवलोकितम्। चतुर्भिर्मिलित्वोक्तम्। स्वामिनो रजकस्य। अस्मांस्तारयिष्यति—इनमें संधिच्छद करो।

४—क्षुत्। धर्म-सूत्रिका। दिवसः—इनके तृतीया विभक्ति में रूप लिखो।

---

# विद्यावलिप्तो युवा

एकदा कश्चिद् एम० ए० उपाधिधारी युवको नावमारुह्य भागीरथ्या नद्या प्रयागं गच्छति स्म। वायौ मन्दं मन्दं वहति सति नाविको नौपटम् उत्तोल्य तदा सानन्दं गातुमारब्धवान्। पुस्तके निबद्ध-दृष्टिस्तु स युवकस्तदानीं नाविकस्य स्वरलयविहीनं तद् गानम् आकर्ण्य उद्वेजितः सन् सोपहासमुवाच—'नाविक! किं त्वयाऽधीतं संगीतशास्त्रं काव्यादिकं वा, येनैतादृग् विशुद्धं सरसं च गानं गायसि!' एतत् श्रुत्वा कर्णधारः सलज्जमाह 'मूर्खाः वयं श्रीमन्! न जानीमः संगीतशास्त्रं काव्यादिकं वा, केवलं मनोविनोदार्थं यथाकथञ्चिद् गायामः।'

ततो युवक उवाच—'न मया कश्चिदपि तादृशो भाग्यहीनो जनो दृष्टो येन किमपि नाधीतं काव्यम्। एकया किल कवितया सरसया यादृक् सुखमुत्पद्यते वसुन्धराराज्यस्याधिगमेऽपि न तादृग्—इति मन्ये।

यतस्त्वया नाधीतं काव्यम्, अतो जीवनस्य ते चतुर्थ-भागो निरर्थक एव गतः ।' भवतु तावत्, 'भूगोल-स्त्वयाऽधीतः किल ?'

'को वा भूगोलः ? कोऽर्थः प्रकाशतेऽत्र ? किञ्चि-दपि तन्न जानामि'--इत्युवाच कर्णधारः । तदानीं स युवा 'येयं पृथिवी बहुद्वीपा बहुभिः सागरैश्च परिवेष्टिता, एषा तावत् किम्परिमाणा, कुत्र च को देशो विराजते ? कस्मिन् देशे किं वस्तु जायते ? तत् सर्वं भगोलपाठेन परिज्ञायते । भूगोलमपठतः तव-अपरोऽपि कियानायुभर्गो वृथेति तर्कयामि'-इत्याह । अस्मिन्नेव क्षणे आकाशमाक्रमितुं प्रवृत्ता भयावहा जलधराः । नाविकस्तु कथाऽवसाने सहसा नीलनभसि घनघटामालोक्य परां भीतिमभजत् । तरणिरपि आसीत् तदानीं तरङ्गिणीमध्ये ।

साध्वसेन अभाषत् च नाविकः-'महात्मन्, किं भवता नदीतरणं ज्ञायते ? दृश्यतामत्र झञ्झावात आगच्छति, नौकाऽपि सम्प्रत्येव निमज्जेत् ।' प्राण-भयात् त्रस्तः स विद्वान् युवा कातरमकथयत्-नाहं

जानामि सन्तरणम्, कः किलोपाय इदानीं मे भविष्यति ? उपदिश्यतां किं तावत् करणीयमधुना ?' नाविकस्तु प्रत्यब्रवीत्–'भवांस्तु विद्वान्, काव्यादीनि भूगोलेतिहासौ च सर्वं जानाति, कथमेतावदपि ज्ञानमधुना भवन्तं न रक्षति ?'

युवकः कातरदृष्ट्या नाविकमालोकयन्नाह–'भ्रातः, स्वज्ञानदुर्विदग्धः अहमधुना प्रत्यक्षमेव पश्यामि–यद् बह्वत्र संसारे ज्ञातव्यमस्ति, सर्वं ज्ञानमधिगन्तुं न पार्यते केनापि जनेन। क्षम्यतां बन्धो ! मे विद्याऽवलेपः'–इति वदन्नेव स 'एम० ए०' उपाधिविशिष्टो युवा स्वोपाधिमादाय मन्दाकिन्या गम्भीरजलराशौ नावा सहैव निममज्ज।

## शब्दार्थ

नाविकः=मल्लाह। उद्वेजितः=बुरा अनुभव करता हुआ। कर्णधारः=नाविक। कियान्=कितना। घनघटाम्=बादलों के समूह को। तरणिः=नौका। तरंगिणी=नदी। साध्वसम्=भय। झंझावातः=वृष्टि के साथ चल रही आँधी। कातरः=दीन। अवलेपः=अहंकार।

## अभ्यास

(क) इस कथा का अभिप्राय अपने शब्दों में लिखो।

(ख) युवक ने नाविक के जीवन को व्यर्थ क्यों समझा ?

१—नौ। उपाधि। शास्त्र। नभस्। दृष्टि—इनके द्वितीया तथा षष्ठी के रूप लिखो।

२—वहति सति। उद्वेजितः। अधीतम्। वेष्टितम्। अपठतः। ज्ञातव्यम्—इनमें प्रकृति प्रत्यय का विश्लेषण करो।

३—निबद्धदृष्टिः। सलज्जम्। जीवनचतुर्थभागः। भूगोलपाठः। स्वज्ञानदुर्विदग्धः। विद्यावलेपः—इनमें विग्रह सहित समास का निर्देश करो।

४—उत्तोल्य। कातरदृष्ट्या। सलज्जम्। मनोविनोदाय—इनको अपने वाक्यों में प्रयुक्त करो।



# कवीन्द्ररवीन्द्रः

भारते हि बहवो महापुरुषाः काले काले प्रादुर्भवन्ति। तेषामेव मध्ये रवीन्द्रनाथोऽप्येको महापुरुषः स्वजन्मना भारतभुवमलञ्चकार। अयं वङ्गदेशे १८६१ तमे ईसवीयवर्षे मईमासस्य सप्तमे दिने जन्म लेभे। अस्य पिता देवेन्द्रनाथठक्कुर आसीत्। यं 'ब्राह्म' धर्मस्योन्नायकतया लोकाः 'महर्षि' पदेन व्यवहरन्ति स्म। बाल्यावस्थायामेव रवीन्द्रनाथस्य प्रतिभा उन्मिषिता आसीत्। तदानीमेव अनल्पायां कल्पनायां निमग्नः भूयसीं मनोज्ञां कवितां रचयति स्म। तदारभ्यैवास्य महापुरुषस्य 'स्वतन्त्रता' परमभीष्टा आसीत्। शुकसारिकादिकं पक्षिणमपि पञ्जरे निबद्धं दृष्ट्वा अस्य मनो नितान्तं दूयते स्म। असति बाधके अपसारयति स्म पक्षिणं पञ्जरात्। १८७४ तमे ईसवीयवर्षे पंचदशवर्षदेशीयोऽपि स 'भारती' पत्रिकायाः सम्पादनविभागे कार्यं समारब्धवान्। तत्रास्य अलौकिकीं सम्पादनकलां दृष्ट्वा महान् विस्मय आसीत् तत्रत्यानां विदुषामपि।

अनन्तरं सप्तदशवर्षीयोऽयं अधिकस्य ज्ञानस्य

समुपार्जनेच्छया इङ्गलैंडदेशमगमत् । तत्रत्या जना अस्य अलौकिक्या प्रतिभयाऽत्यन्तं प्रभाविता आसन् । उदारताऽप्यस्य महती आसीत् । एकदा यदाऽयं तत्र पथि गच्छन्नासीत् तदा कोऽपि भिक्षुकः किमपि याचितवान् । अयन्तु तस्मै 'क्राउन' नामिकां स्वर्णमुद्रां प्रदत्तवान् । भिक्षुकेण चिन्तितं यद्- 'असौ दाता पणकस्य भ्रमेण स्वर्णमुद्रां दत्तवान्'- इति । स आगत्य एनमब्रवीत्-'भो महाभाग ! किं पणकस्य भ्रमेण प्रदत्ता इयं स्वर्णमुद्रा भवता ?' श्रीरवीन्द्रो विहस्य अब्रवीत् 'नहि नहि, बुद्धिपुरः-सरमेव मया दत्ता इयं स्वर्णमुद्रा ।' एवंभूता अनेके दृष्टान्ताः सन्त्यस्य महापुरुषस्योदारतायाः ।

अथ स्वदेशं परावृत्य १८८३ तमे ईसवीयवर्षे स्वानुरूपायाः मृणालिनीदेव्याः पाणिग्रहणं कृत्वा श्रीरवीन्द्रो गृहस्थो बभूव । धनहीनेषु दीनेषु कर्षकादिषु श्रमिकजनेषु अनुकम्पा महती सहानु-भूतिश्चास्य महापुरुषस्य सदैवासीत् ।

'भारतीयशिक्षा इदानीं वैदेशिकवातावरण-

दूषिता'—इति विचार्य शिक्षायां पुरातनीं भारतीयां परिपाटीं परिचालयितुमयं शान्तिनिकेतननामानं विद्याश्रमं स्थापितवान् ।

१९१० तमे ईसवीयवर्षे राजनीतिचतुरोऽयं 'स्वं देशीयसमाज' नाम्नीं महतीं संस्थां स्थापितवान्, यतो हि भारतीयासु जनतासु लार्डकर्जनाभिधेयस्य शासकस्य दुरभिसन्धिमयो व्यवहारोऽत्यन्तम् असह्य आसीत् । १९१२ तमे ईसवीयवर्षे डेनमार्कशिक्षा-पद्धतेरध्ययनाय पुनर्विदेशं जगाम । तदानीमेव 'लण्डन' नगरे 'एण्ड्रूज' 'यीट्स', 'राथेन्स्टीन्' 'पियशन्' प्रभृतिभिः तत्रस्थैर्मनीषिभिः स्वकीयेन गुणगौरवेण बन्धुतां प्राप । गुणमुग्धैः तैरेव विद्वद्भिः सम्प्रार्थितः सन् स्वीयस्य 'गीताञ्जलि' काव्यस्य आङ्गलभाषायामनुवादं चकार । तत्रत्या 'इण्डिया सोसायटी' नाम्नी संस्था गीताञ्जलेः तमनुवादं प्रकाशितवती ।

अनन्तरं १९१३ तमे ईसवीये वर्षे भारतीया जनता सहर्षं सगौरवं च शुश्राव—'कवीन्द्रो रवीन्द्रो विश्वविख्यातं 'नोबेल' पुरस्कारं स्वकीयस्य गीताञ्जलिकाव्यस्य विरचनगुणेन प्राप्तवान्'—इति ।

आवश्यके तु समाजसुधारेऽस्य पुरुषधौरेयस्य मनः सर्वदैव संलग्नमासीत्। अत एव स सुरूल-नामके स्थाने ग्रामसुधारकेन्द्रं समुद्घाटितवान्, यस्य 'श्रीनिकेतन' इति नाम्ना प्रसिद्धमस्ति, यत्र जना व्यावहारिकीं सुशिक्षां सम्प्राप्य समाजे गौरव-पूर्णं जीवनं यापयन्ति। गुणसमादरस्तु अस्य महा-पुरुषस्य असाधारण आसीत्। अत एव हि १९२१ तमे ईसवीये वर्षे स्वदेशपरदेशयोः ज्ञानविज्ञान-विनिमयस्य आवश्यकतामनुभूय स 'विश्वभारती' नाम्नीं महतीं संस्थां स्थापयामास। अनया संस्थया स संसारे विश्वबन्धुत्वभावनां प्राचारयत्। अनेके वैदेशिका विद्वांसोऽप्यत्र विद्यानुशीलनं कुर्वन्ति। श्रीगान्धिमहोदयोऽप्यत्र कञ्चित् कालमुषित्वा कवीन्द्रस्य सान्निध्येन परां शान्तिमनुभवति स्म। कवीन्द्रो रवीन्द्र एव श्रीगान्धिनो विश्वभारतीनिवासकाले तस्य महात्मेति उपाधिं चकार। तयोर्मिथः अत्यन्तमेव सौहार्दमासीत्।

भारतभूमौ भारभूतं वैदेशिकशासनमसहमानः क्रान्तदर्शी कवीन्द्रो भारतयुवकान् मातृभूमिसेवायां प्रेरयितुं देशभक्तिविषयिणीः कविता अरचयत्। यद्यपि महात्मगान्धिना प्रचालितमसहयोगान्दोलनं

श्रीरवीन्द्रेण नानुमोदितमासीत्, तथापि सः श्रीगान्धिनः असहयोगान्दोलनस्य साफल्यमैच्छत्। द्वितीये महा-समरसमये श्रीरवीन्द्रो वैदेशिकशासकैः प्रदत्तं 'नाइट्' इत्युपाधिमत्यजत्।

नानाविधस्य नाटक-नाटिका-गीतकाव्योपन्यासादिकस्य विरचनेन लोकमनोरञ्जनाय केवलं ललितकलाया अनेन महापुरुषेण उपासनैव न कृता, अपि तु स्वकीये तत्र तत्र ग्रन्थे सुमहद् ज्ञानं निबद्धम्, यस्याध्ययनेन मानवाः सत्यं शिवं सौन्दर्यं च प्राप्तुमर्हन्ति।

१९४१ तमे ईसवीये अगस्तमासस्य सप्तमे दिने ८० वर्षके वयसि पार्थिवं शरीरं विहाय श्रीरवीन्द्रो दिव्यज्योतिषि अलीयत। कस्तादृशो धन्यधन्यो मानवमूर्द्धन्य इदानीं स्याद्? यं महामानवः महात्मा गान्धी अपि 'गुरुदेव' इति सादरं व्यवहरति स्म।

## शब्दार्थ

अलङ्चकार=विभूषित किया (सजाया)। उन्नायकतया=उठाने वाला (उद्धार करने वाला) होने से। पदेन=नाम से। प्रतिमा=बुद्धि। मनोज्ञा सुन्दर। दूयतेस्म=दुःखी होता था। नितान्तम्= बहुत ज्यादा।

सप्तदशवर्षदेशीयः=अभी जिसे सत्रहवां वर्ष चढ़ा है । श्रमिकः=मजदूर । धौरेयः=श्रेष्ठ । उषित्वा=रहकर । वैदेशिकः=परदेशी ।

## अभ्यास

(क) श्री कवीन्द्र रवीन्द्र की उदारता तथा कविता ी महिमा का अपन शब्दों में वर्णन करो ।

(ख) श्री रवीन्द्रजी ने किस संस्था की स्थापना की, और उसका क्या महत्त्व है ?

१—महर्षिः । रवीन्द्रः । कवीन्द्रः । समुपार्जनेच्छाम्—इनमें सन्धिच्छेद करके सविग्रह समास दिखाओ ।

२—भू । भूयसी । विद्वस् । महती । शान्ति—इन शब्दों के चतुर्थी तथा सप्तमी विभक्ति में रूप लिखो ।

३—उषित्वा । उद्घाटितवान् । याचितम् । गतिः—ये शब्द किस धातु से कौन प्रत्यय लगाकर बने हैं ।

४—धर्मस्य+उत्+नायकः । श्रीरवीन्द्रः+विहस्य+उवाच । गान्धिः-महोदयः+अपि+अत्र+—इनमें सन्धि करो ।

———

# परदुःखनिवारणम्

अथ भोजे समाचङ्क्रम्यमाणे सिंहासनं पुत्तलिकाऽन्या कथयति--भो राजन् ! श्रूयताम् । विक्रमे राज्यं कुर्वति भूमण्डले पिशुनः तस्करश्च पापकर्मनिरतो नासीत् । अन्यच्च, यस्य राज्ञः सदा राज्यभारचिन्ता बलवद्वैरिविजयचिन्ता च अस्ति स रात्रौ निद्रामपि नाधिगच्छति । उक्तञ्च--

अर्थातुराणां न पिता न बन्धुः
कामातुराणां न भयं न लज्जा ।
चिन्तातुराणां न सुखं न निद्रा
क्षुधातुराणां न बलं न तेजः ॥

अयं विक्रमादित्यो राजा तथाविधो न भवति । सर्वान् अर्थिभूभुजः स्वपादपद्माश्रितान् विधाय आज्ञाप्रदानेन राज्यं करोति ।

एकदा स राज्यभारं मन्त्रिषु निधाय स्वयंयोगिवेषेण देशान्तरं निर्गतः । यत्राऽऽत्मनश्चित्तस्य सुखं

भवति तत्र कतिचिद् दिनानि तिष्ठति, यत्राश्चर्यं पश्यति तत्रापि कालं नयति ।

एवं पर्यटन् स एकस्मिन् दिवसे यदा महाऽरण्य-मध्य प्राविशत्, तदा सूर्योऽस्तं गतः । तद् दृष्ट्वा राजा वृक्षमूलमेकमाश्रित्य रात्रौ स्थितः । तस्य वृक्षस्योपरि वृद्धः चिरञ्जीविनामा कश्चित् पक्षिराज आसीत् । तस्य पुत्राः पौत्राश्च देशान्तरं गत्वा स्वोदरपूरणं विधाय, सायंकाले प्रत्येकमेकैकं फलमा-दाय, वृद्धाय तस्मै चिरञ्जीविने प्रतिदिनं प्रयच्छन्ति ।

ततो रात्रौ चिरञ्जीवी सुखेनोपविष्टस्तान् पक्षिणः अपृच्छत् । राजाऽपि वृक्षमूले स्थितस्तद्वचः शृणोति । "भोः पुत्राः ! युष्माभिर्नानादेशान् पर्यटद्भिः किं चित्रं दृष्टम् ?" तत्रैकेन पक्षिणा भणितम्--"मया किमप्याश्चर्यं न दृष्टम्, परमद्य मम चेतसि महादुःखं भवति"। चिरञ्जीवि-नोक्तम्--"तत् कथय किंनिमित्तं दुःखम् ?' तेनोक्तम्–'केवलं कथनेन किं भवति ?' वृद्धेनोक्तम्–"भोः पुत्र ! यो दुःखी स सुहृदि दुःखं निवेद्य सुखी भवति ।"

तस्य वाक्यं श्रुत्वा स दुःखकारणं कथयति–"भोः

तात ! श्रूयताम्—अस्ति उत्तरदेशे शैवालघोषो नाम पर्वतः। तत्पर्वतसमीपे पलाशनगरमस्ति। तस्मिन् पर्वते स्थितः कश्चित् राक्षसः प्रतिदिनं नगरमागत्य सम्मुखायातं यं कञ्चन मानुषं स्त्रियं बालकादिकं वा पर्वते नीत्वा भक्षयति। एकदा स नगरवासिभिः जनैः उक्तः—"भो बकासुर ! त्वं यथेच्छं सम्मुखपतितं यं कमेवं मा भक्षय, वयं तुभ्यं प्रतिदिनमाहारार्थमेकं मानवं दास्यामः।" तद्वचः तनाङ्गीकृतम्।

तदनन्तरं तत्रत्यो जनः प्रतिदिनं गृहक्रमेणकैकं मानुषं तस्मै प्रयच्छति। एवं महान् कालो गतः। अद्य पूर्वजन्मनि सञ्जातसौहार्दस्य मम मित्रस्य कस्यचित् ब्राह्मणस्य वारः समायातः, तस्यैक एव पुत्रः। पुत्रं ददाति चेत्, सन्ततिच्छेदो भविष्यति, आत्मानं प्रयच्छति चेत्, भार्या विधवा भविष्यति, वैधव्यं पुनर्महादुःखम्। पत्नीं दास्यति चेत्, आश्रमभ्रंशो भवति। तेषां दुःखेनाहं महादुःखी। इति मम महद् दुःखकारणम्।"

तस्य वचनं श्रुत्वा तत्रत्यैः पक्षिभिर्भणितम्—"अहो ! अयमेव सुहृत्, यः सुहृदो दुःखेन स्वयं दुःखी भवति। एतदेव मित्रत्वम्।

उक्तञ्च--

सुखिते सुखी सुहृदि यः दुःखिनि दुःखी च स बन्धुर्भवति।
उदिते मुदितः सिन्धुः शशिन्यस्तमयति सुक्षीणः ॥

—इति पक्षिणो वचः श्रुत्वा विहङ्गरवार्थविद् राजा तत्र नगरे वध्यशिलासमीपे गतः। तत्र ब्राह्मणं निरीक्ष्य, अभयं दत्वा, स्वगृहं सम्प्रेष्य च, तत्समीपस्थे सरोवरे स्नात्वा वध्यशिलायामुपविष्टः।

तस्मिन् समये राक्षसः समागत्य, प्रहसितवदनं पुरुषं दृष्ट्वा विस्मितस्तं वदति-"भो महासत्त्व! अत्र शिलायां प्रतिदिनं यः उपविशति, स मदागमनात् पूर्वमेव म्रियते। त्वं पुनः महाधैर्यसम्पन्नः प्रहसितवदनो दृश्यसे। यस्य मरणकालः समायातः, तस्येन्द्रियाणि ग्लानिं प्राप्नुवन्ति, त्वं पुनरधिकां कान्तिं प्राप्य प्रहससि। तर्हि कथय को भवान्?" -इति। राजा भणति--"मया परार्थमेतच्छरीरं दीयते स्वेच्छया, अतो न मे कापि ग्लानिः, यद् भवतु, किमनेन विचारेण तव? त्वमात्मनः समीहितं कुरु।"

तदा राक्षसेन स्वमनसि विचारितम्--"अहो!

साधुरयं यः आत्मनः सुखभोगेच्छां विहाय परदुःखेन दुःखी भूत्वा अत्र एति। उक्तञ्च—

त्यक्त्वात्मसुखदुःखेच्छां सर्वसत्त्वसुखैषिणः।
भवन्ति परदुःखेन साधवोऽत्यन्तदुःखिनः॥

एवं विचार्य स राजानमब्रवीत्—"भो महापुरुष! त्वं सर्वस्यार्तिहरो गुरुः, यतः त्वं विश्वस्यार्त्तिं परिहरसि। परार्थं शरीरं प्रयच्छतस्तवैव एतच्छरीरं श्लाघ्यम्।

कुतः—

पशवोऽपि हि जीवन्ति केवलं स्वोदरम्भराः।
तस्यैव जीवितं श्लाघ्यं यः परार्थे हि जीवति॥

भवादृशां परोपकारिणामेतच्चित्रं न भवति।

यथा चोक्तम्—

किमत्र चित्रं ? यत् सन्तः परानुग्रहतत्पराः।
न हि स्वदेहशैत्याय जायन्ते चन्दनद्रुमाः॥

भो महासत्त्व! अनेनैव परोपकारेण त्वं सर्वाः सम्पदः प्राप्नोषि। यदुक्तम्—

परोपकारव्यापारः पुरुषो यः प्रजायते।
सम्पदं स समाप्नोति परत्राऽपि परं पदम्॥

एवं भणित्वा पुनः राजानमब्रवीत्–"भो महासत्त्व ! तवाहं तुष्टोऽस्मि, वरं वृणीष्व" । राज्ञोक्तम्–"भो राक्षस ! त्वं यदि मम प्रसन्नोऽसि, तर्ह्यद्यप्रभृति मनुष्यभक्षणं परित्यज । अन्यमपि मया अभिधीयमानमुपदेशं शृणु ।

यथात्मनः प्रियाः प्राणाः सर्वेषां प्राणिनां तथा ।
तस्मान्मृत्युभयात् तेऽपि त्रातव्याः प्राणिनो बुधैः ॥

तथा च–यथा भवज्जीवितमात्मनः प्रियं
तथा परेषामपि जीवितं प्रियम् ।
निरीक्ष्यते जीवितमात्मनो यथा
तथा परेषामपि रक्ष जीवितम् ॥"

राज्ञा इति निरूपितः राक्षसः तदाप्रभृति जीवमारणं तत्याज । राजा च स्वनगरीं प्रत्यगात् ।

इमां कथां कथयित्वा पुत्तलिका भोजराजं प्रति अब्रवीत्–"त्वयि एवं परोपकारदयादयः गुणाः विद्यन्ते चेत्, तर्हि अस्मिन् सिंहासने समुपविश" । राजा तूष्णीमासीत् ।

## शब्दार्थ

समाचंक्रम्यमाणे=बैठने पर (आसन को समाक्रान्त करते हुए)। पिशुनः=चुगलखोर। तस्करः=चोर। अर्थी=याचक, मांगने वाला। भूभुजः=राजा लोग। सुहृदि=मित्र पर। आहारार्थं=खाने के लिये। सौहार्दम्=मित्रता। सर्वसत्त्वसुखैषिणः=सब प्राणियों के सुख को चाहने वाले। आर्तिम्=पीड़ा, दुःख को। स्वोदरंभराः=अपने पेट को भरने वाले। वृणीष्व=मांगों, स्वीकार करो। तूष्णीम्=(अव्यय) चुपचाप।

## अभ्यास

(क) पक्षी ने चिरंजीवी के प्रश्न का क्या उत्तर दिया ?

(ख) राक्षस ने राजा को न मारकर वर मांगने के लिये क्यों कहा ?

कथा का सारांश लिखो।

१—बलवत्। वैरिन्। पक्षिन्। चतुर्। राजन्—इनके स्त्रीलिंग में षष्ठी विभक्ति के रूप लिखो।

२—परोपकारदयादयः। मृत्युभयात्। उक्तसुखदुःखेच्छाम्। महारण्यमध्येऽविशत्—इनमें सन्धि तथा सविग्रह समास दिखाओ।

३—राज्ञि। चिरंजीविना। स्त्रियम्। आत्मनोः। सुहृदि संपदः—ये किस विभक्ति तथा वचन के रूप हैं ?

४—ब्रू। अस्। आप्। या। भक्ष्। विश्—इन धातुओं के लङ् तथा लट् के रूप लिखो।

समाप्त।



